"त्वत्प्रीत्यर्थं सरस्वतीविनोदं कुर्मः"—पञ्चतन्त्रम्

सारदाविनोदे

# श्रीमद्भट्टोजिदीक्षितविरचितायाः
# वैयाकरणसिद्धान्तकौमुद्याः

( पूर्वार्द्धे—तद्धितप्रकरणम् )

श्रीकुमुदरञ्जन भिषगाचार्येण

कृतभाषान्तरः तत्कृतया मितभाषिणीसमाख्यया व्याख्यया च समेतः

BHATTOJI DIKSHITA'S

# SIDDHANTA-KAUMUDI

## Vol, III

( TADDHITA--APATYADHIKARA )

*With English Translation and Sanskrit Commentary*

BY

**KUMUDRANJAN RAY, M.A., Ph.D(H),**

*Bhishagacharyya.*

Author of Evolution of Gita, Philosophy of Ayurveda, Meghadutam, Laghu-Kaumudi, &c.

# PREFACE

We have said much about Panini, the grammarian in our Part IV (Bhwadi) and much about Astadhyayi and the evolution of early grammatical thoughts and their culmination into Siddhanta Kaumudi in Vol I part I (Sandhi), hence here we won't say anything more.

But here we give a few slokas written by late Saradaranjan Ray, my father to show to our admirers that apart from being a mathematician, a Homoeopath, a grammatical scholar in Panini, he was well-versed in Sanskrit Kavyas and Dramas and himself a poet.

This part contains Taddhita (Apatyadhikara only)--the rest will be out next June.

Calcutta
June, 1938.

**Kumud Ranjan Ray**

▪

# Errata on Vol I, Part II

## (*Of Siddhanta-Kaumudi*)

P. 26, Sutra 2I1, line 14 for "इण् च कुश्च इति समाहारद्वन्द्वः। एकवचनमार्षम्" read "इण् च कुश्च इति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगे तु एकवचनम् आर्षम्"।

P. 52. line 22, for "having an affix" read "having a case affix".

P. 68' line 14, for "अध्याहारपरशब्दयोगेप्रथमा" read "अध्याहार-परशब्दयोगे पञ्चमी"।

P. 321, line 1, for "पुंयोगादाख्याम्" read "पुंयोगादाख्यायाम्"।

P. 341, line 16, for "वैयाकरणसिद्धान्तकौमुद्याः" read "वैयाकरण-सिद्धान्तकौमुदीव्याख्यायाः"।

P. 113. Sutra 302, for "राऽस्मृशसोः" read "वाऽस्मृशसोः"।

[N. B.—Also see "*errata*" at the end of Siddhanta-Kaumudi Vol IV].

Vol.—IV.

P. 102, line 17, for "लै (?) ललुंञ् स्यात्" read "लः (?) लुक् स्यात्"

*(Written by late Principal Ray on the occasion of His Majesty late George the Fifth's arrival in India).*

## गाथापञ्चदशी

# A COLLECTION OF FIFTEEN SONGS

देशे देशे पर्वते पर्वते च ग्रामे ग्रामे कानने काननेऽपि ।
गेहे गेहे घोष्यतामद्य वार्त्ता भूयः प्राप्तो भूतलं रामचन्द्रः ॥१॥

In every country, on every hill top, in every village, in every forest and from house to house let the news be proclaimed that Ramachandra has come back to Earth. (1).

धन्या नूनं [illegible] दिल्ली पुण्यलग्ने यत्र पुण्ये मुहूर्त्ते ।
सर्वत्यागी लोकहेतोः ससीतो भूयः प्राप्तो भूतलं रामचन्द्रः ॥२॥

Lucky indeed is Delhi though her days are long past-- Delhi where, at an auspicious moment, The Blissful Ramachandra, who had renounced all for the sake of the people, has come back to Earth along with Sita. (2).

पूर्वं योऽसौ गोप्रतारं प्रविष्टः स्वाधिष्ठाने लोकसाक्षी परस्तात् ।
सोऽयं साक्षात् सज्जते लोककृत्ये राजा रामो जर्जरूपो नुमस्तम् ॥३

King Rama, who, in the days of yore, had entered the stream at Gopratara and then at his own abode had stayed watching the events of the world, is now, in the shape of King George, making a personal effort for the sake of the people. Him we adore. (3).

प्राग्भर्त्तारं स्वेच्छयानुव्रजन्ती सीता क्रान्ता भारतप्रान्तमात्रम् ।
तीर्णा सेयं सप्तपाथोधिपूरं भर्त्तुः कार्ये मेरिसंज्ञा नुमस्ताम् ॥४॥

Sita, in bygone times, following her lord, of her own accord, had crossed merely the boundary of Bharatavarsha; but now, in the person of Queen Mary, she has crossed the seven seas for the sake of her lord. Our obeisance to her (·4).

सत्यं दृष्टौ नैव तौ दम्पती नः सन्तुष्यामो वार्त्तया तन्महिम्नः ।
भक्तः पश्यन्नैव लक्ष्मीनृसिंहौ सद्यो मुक्तः स्थातुमत्रोत्सहेत ॥५॥

It is true the Royal Pair is an unseen entity to us, and we have to rest satisfied with a mere report of the majesty of their prowess. This is as it should be, for, the devoted, after having had a direct vision of Lakshmi and Nrisimha, is forthwith emancipated and cannot stay in this world even for a moment. (5).

कस्ते स्तूयात्तं प्रभावं नरेन्द्र ! आश्चर्य्यं तद् यद्व्यधायि त्वयेदम् ।
आज्ञामात्रं प्राणयोगो मुमूर्षोर्धन्वप्राये राजधानी समृद्धा ॥६॥

O Lord of Men, who can sufficiently beland the majesty of thy prowess? What thou hast accomplished is truly astonishing. At your command the dying have come back to life, and what was all but a desert has been turned into a prosperous seat of Government. (6).

यद्येतस्मिन्निन्दकाः सन्ति सन्तु तेषामर्थे नैष ते देव यत्नः ।
भानुः प्रध्वङ्क्ति नैशं तमिस्रं गोमायूनां प्रीतये तत् कथं स्यात् ॥७

Detractors in this matter may be let alone. Thou art not exerting thyself to-day for their sake. The sun dispels the nightly gloom, but how can that be to the delight of the jackal? (7).

ये तु प्राज्ञा विप्रवादं प्रपन्ना नोदर्कस्तैः सम्यगालोचितोऽस्मिन् ।
दोषस्तेषां नैष मत्याः, परन्तु सर्वः सर्वं नेह पश्यत्यशेषम् ॥८॥

But those wise people who have expressed disapprobation, surely, have not carefully considered the consequences of this step. This is no detraction to their wisdom, for, every one cannot see everything that is happening or will happen in this world. (8).

कालीघाटा मायिनी राजभोग्या त्यक्ता ऋज्वी प्राप्तपूर्वापि मुम्बा ।
एवं गूढ़ं विद्विषन्मद्रराजोऽनैषीत् कालं रोषकालाननश्रीः ॥९॥

"Wily Calcutta is the Royal mistress, while plain Bombay is ignored though first reached"—Thus spiting inwardly has Madras been spending his days with his face blue through rage. (9).

एकं तावत् सौमनस्यं पुरीणां मानार्हाया माननञ्च द्वितीयम् ।
केन्द्रे स्थित्वा सूक्ष्ममीक्षा समन्ताद्दिल्लीवासे सिद्धमेतत्त्रयं हि ॥१०॥

The mutual good will of the cities, the honouring of her that deserves honour, a sharp scrutiny all round from the centre—all these three are indeed secured by having the seat of Government at Delhi. (10).

आस्तामेतच्चर्चया किं कृतं स्यान्नीतिर्ध्याता सुप्रयुक्ता दुरूहा ।
आज्ञा राज्ञः सर्वथा वन्दनीया युक्तायुक्ता नो विचार्य्या प्रजानाम्॥११

Be that as it may ; discussion is futile. It is difficult to rate at its true worth an administrstive measure that is well thought out and well executed. A loyal subject has to bow down before the king's mandate and must not discuss its merits (11).

मन्ये यत् स्यात् साम्प्रतं न स्तदेवादिच्चद्देवो मन्त्रिणश्चान्वतिष्ठन् ।
हृष्टा लोकास्तोषितौ मन्त्रिमुख्यौ तत् प्रीयेतां राजजायापती च ॥१२

Methinks what His Majesty has ordained his ministers have arranged for *must* be for the people's good. The people are gratified, the two excellent ministers are pleased ; so may the Royal Pair be plesed too. (12).

द्वीपे द्वीपे तावकी राजपूजा पूजां पूजामन्तरा कार्य्यचिन्ता ।
व्यासक्तात्वं ऽप्यस्य देशस्य राजन्नध्येषि त्वं तेन वर्द्धामहेऽद्य ॥१३॥

Sire, from land to land royal welcome reaches thee, and the intervals between the fetes are taken up by state deliberations. Though thus busy, thou art graciously pleased to think of India. To this we owe our salvation to-day. (13).

तत्ते चित्तं देवदेवे स्थिरं स्यान्मा त्वां प्रापद्रोगशोकातिपातः ।
इष्टादिष्टं गच्छ विघ्नान् विधूय मा ते च्छैषीद्भारतीया सपर्य्या ॥१४॥

May thy heart remain fixed upon the God of Gods; may visitations of disease and disaster keep away from thee: may blessings follow blessings unto thee overcoming all difficulties; may India's homage continue with unabated fervour. (14).

देवी भर्त्तुः सा च कल्याणकामा लक्ष्मीः साक्षादच्युतं व प्रपन्ना ।
प्रीता तिष्ठेतास्मदीयेषु नित्यं मैनां ह्रासीद्भारतीया नमस्या ॥१५॥

May her Imperial Majesty, ever watchful over the welfare of her lord, like Lakshmi herself united to Vishnu, always take counsel with ministers favourably disposed towards us, and may India's worship of her continue uninterrupted. (15).

गाथापञ्चदशीं नृपेन्द्रचरितध्यानप्रमोदोद्भवां
मार्गेऽष्टाद्विमिते दिने व्यरचयत् श्रीसारदारञ्जनः ।
आशास्ते स च तस्य राजभिषजः सन्धानबन्धोर्गुणै-
र्वङ्गान् भङ्गजुषोऽभिषिच्य वहतादानन्दमन्दाकिनी ॥

This collection of fifteen songs originated in the joy derived from meditating upon the deeds of the king of kings: Saradaranjan has composed it to-day the 28th day of Agrahayana (Dec. 14), and he prays that, by the excellencies of that Royal Surgeon who promotes re-union, may a veritable Ganges of bliss flow across Bengal that is suffering from fracture.

# सिद्धान्तकौमुदी ।

"ओम्"

वन्दे चैतन्यदेवं तं निष्कलङ्कं यदिच्छया ।
सल्लोलं वर्त्तते चित्रं लेखभूमौ जडोऽप्ययम् ॥

## अथ तद्धितप्रकरणम् ।

### अपत्यादिविकारार्थ-साधारणप्रत्ययाः ।

१०७२ । समर्थानां प्रथमाद्वा । ४।१।८२ ॥

टी — । इदं पदत्रयम् अधिक्रियते । "प्राग् दिशः—" (५।३।१, सूत्र— १९४७) इति यावत् । सामर्थ्यं परिनिष्ठितत्वम् । कृत-सन्धिकार्य्यत्वम् इति यावत् ।

All the three words 'समर्थानाम्', 'प्रथमात्', and 'वा' go up to i.e. attach in all the sutras up to the sutra 'प्राग्दिशो विभक्तिः' (No. 1947) —i.e. when several words are here syntactically connected in the senses of "तस्य अपत्यम्", "तेन रक्तं रागात्" and "तत्रभवः" etc., then the affix in question will be optionally (वा) attached to the first समर्थ word (समर्थानां प्रथमात्); in other words in the syntactically connected words here the entire first word is to be taken as the stem (प्रकृति) to which an affix (प्रत्यय) is to be attached. Thus in उपगोः अपत्यम्, which are syntactically connected (i.e. which have interdependence व्यपेक्षा) the अपत्यप्रत्यय

is to come to the entire first word उपगु। So उपगु + अण् = औपगव and so on. And this अधिकार of words is to go before स्वार्थिक-प्रत्यय commencing with—"प्रागदिशो विभक्तिः"। In other words the whole षष्ठ्यन्त words &c, in these cases will take the affix and never the प्रथमान्त words. Owing to अधिकार of "वा" here, optionally the whole वाक्य as उपगोः अपत्यम् may be used. Now it may be argued that in उपगोः अपत्यम् &c., the तद्धितवृत्ति may bar समासवृत्ति, it is so no doubt; but this bar is optional owing to the अनुवृत्ति of the word अन्यतरस्याम् from the immediately prior sutra which is "दैवयज्ञि-शौचवृक्षि-सात्यमुग्रि-काण्ठेविद्धिभ्योऽन्यतरस्याम्" (४।१।८१)। उपग्वपत्यम् in the sense of उपगोः अपत्यम् is also thus optionally correct.

Now Bhattoji here explains the word समर्थ (and सामर्थ्य) by sayinng "सामर्थ्यम् परिनिष्ठितकार्यत्वम्" i.e. by समर्थ we are to understand here as शक्त (able), and सामर्थ्य will then mean ability in the matter of producing a कार्य्य i. e. a meaning here in the matter of शब्द, and this is possible by placing the words in conjunction to produce one whole stem, hence Bhattoji further adds "कृतसन्धिकार्य्यत्वमिति यावत्"। Thus acc. to him the resultant here is—that सामर्थ्य is interdependence by way of placing the words in conjunction or in contiguity (कृतसन्धिकार्य्यत्वं सामर्थ्यम्)। And in such सन्धिकार्य्य of words, the entire first is to take the affix as said before. See also under the rule "तस्यापत्यम्" (infra).

मितभाषिणी—। अत्र सूत्रे—'समर्थानां', 'प्रथमात्', 'वा'—इति पदत्रयम् वर्त्तते। एतत् पदत्रयम् "प्राग्दिशो विभक्तिः" इति सूत्रं यावत्, तस्यापत्यार्थं एव

इत्यर्थः अधिक्रियते। स्वार्थिकेषु अस्याधिकारस्य उपयोगो नास्ति, विकल्पोऽपि तत्रान-वस्थितः—केचित् नित्यमेव भवन्ति। 'तस्यापत्यम्', 'तत्रभव' इत्याद्यर्थे अस्य अधिकारो वर्त्तते एव। सूत्रस्य अर्थोऽयथा—'समर्थानां' अर्थयुक्तसम्बन्धानां शब्दानां मध्ये (समर्थाना-मितिनिर्द्धारणे षष्ठी)—प्रथमात् प्रथमोच्चारितात् प्रत्ययो वा भवति। ततः प्रथमा इति "तस्यापत्यम्" इत्यादि सूत्रे प्रथमोच्चारितं पदम्। ननु तद्धितः (तद्धितं वा) सुबन्तादेव भवति, ततः तस्य पदविधित्वया, "समर्थः पदविधिः"(A) इति सूत्रेणैव (समासे द्रष्टव्यम्) एकार्थीभावादिरूपसामर्थ्यलाभात्, किं पुनः अत्र सामर्थ्यग्रहणं कृतम्? अतः आह—अत्र 'समर्थः' न केवलं सापेक्षः अपि तु शक्त एव। शब्दस्य 'शक्तत्वञ्च' अर्थ विशेषोत्पाद-नयोग्यत्वम्। तच्च शक्तत्वम् सन्धिकार्याभावे कृते सत्येव घटते। अतः आह 'सामर्थ्यं परिनिष्ठितत्वम्' कार्यान्तरोत्पादनयोग्यत्वम् इत्यर्थः; अपरितुष्यन् अर्थं च समधिकं स्फुटीकरिष्यन् पुनः आह—"सामर्थ्यं कृतसन्धिकार्यत्वम् इति यावत्"। कृतसन्धि-कार्यत्वम् चात्र सामर्थ्य, यतः सर्वो हि 'सामर्थ्य' साकाङ्क्षतादि स्पष्टमुपलभ्यते। तच्च षष्ठ्यन्तादिशब्दानां शब्दान्तरेण च सम्बन्धः एव इत्यर्थः, यथा उपगोः वा सुस्थितेः अपत्यम्, इत्यादि; अतोऽत्र काशिकायाम् उक्तम्—"समर्थानाम् किम्? कम्बलं उपगो-रपत्यं देवदत्तस्य। प्रथमादिति किम्? षष्ठ्यन्तात् यथास्यात् प्रथमान्तात् मा भूत्"। एवं सति विकल्पेन सुबन्तात् तद्धितोत्पत्तिः स्यात्। पक्षे वाक्यमपि यथा स्यात्—उपगोः अपत्यमिति॥ ननु एवं—समासवृत्तिः तद्धितवृत्त्या बाध्यते इति चेत्? नैष दोषः। किन्तु पूर्वसूत्रात् "अन्यतरस्याम्"—ग्रहणानुवृत्तेः "उपगोः अपत्यम्" इत्यत्र "उपग्व-पत्यम्" इति समासोऽपि वा स्यात्।

केचित् सूत्रे "समर्थानाम्" इति बहुवचनग्रहणम् नानुमोदन्ते। तेषां मते "समर्थात् प्रथमाद्वा" इत्येव सुवचम्। किन्तु 'उपगोः अपत्यम्" इत्यादि स्थले एकाधिकशब्दसमवाये बहुविधेऽचार्थे सति तद्धितोत्पत्तिर्यथा स्यात् तथा "समर्थानाम्" इति बहुवचनग्रहणं सार्थकम् कृतम्।

---

"A"—'समर्थः पदविधिः' इति सूत्रे द्विविधं सामर्थ्य गृहीतम्। यथा—(१) पदानाम् आकाङ्क्षावशात् परस्परान्वयरूपं व्यपेक्षाख्यं सामर्थ्यम्॥ (२) पदानां समुदायशक्त्या विशिष्टैकार्थप्रतिपादकतारूपम् सामर्थ्यमेव एकार्थीभावलक्षणम्।

१०७३ । प्राग्दीव्यतोऽण् । ४।१।८३ ॥

दी—। "तेनदीव्यति—" ( सूत्र १५५० ) इत्यतः प्राक् अण् अधिक्रियते ।

The affix अण् goes up to the sutra "तेन दीव्यति खनति जयति जितम्" (Pan 4. 4. 2). That is "तेन दीव्यति" enjoins ठक्, and अण् is to pervade all rules up to that one, in the senses of "तस्य अपत्यम्", "तेन रक्तम्" &c.

मित—। अत्र सूत्रे—"तेन दीव्यति—" इति सर्वकार्यशब्दार्थदीव्यत् शब्द विधाय संग्रह्य च प्राग्दीव्यत इति प्रातिपदिको विहितः। तस्मात् 'समर्थानां शब्दानां मध्ये प्रथमात् तद्धितप्रत्ययो भवति' इति उक्त्वा, अधुना—तस्मादेव "तस्यापत्यम्", "तेन रक्तम्—" "तत्रभवः", 'तस्येदम्" इत्याद्यर्थे—"तेन दीव्यतिखनति जयति जितम्" इति सूत्रात् प्राक्पर्य्यन्तम् 'अण्'—प्रत्ययः अधिकृतः वर्त्तते। फलतस्तु अणप्रत्ययः औत्सर्गिकः सर्वत्र गच्छति, किन्तु यत्र इञादिविशेषप्रत्ययोऽपवादभूतोऽभिधीयते तत्र अण् नोपतिष्ठते ।

१०७४ । अश्वपत्यादिभ्यश्च । ४।१।८४ ॥

दी—। एभ्यः अण् स्यात् प्राग्दीव्यतीयेषु अर्थेषु । वक्ष्यमाणस्य ण्यस्य अपवादः ।

The senses e. g. तस्यापत्यम्, तेन रक्तम्, तत्रभवः, तस्येदम् etc., that are enumerated here up to the sutra "तेन दीव्यति—" are called प्राग्दीव्यतीय अर्थ। Now in those प्राग्दीव्यतीय अर्थ, words of the अश्वपति class take अण्, this अण् bars the affix "ण्य" that is due hereby the rule "दित्यदित्यादित्य—पत्युत्तरपदात्ण्यः" and अश्वपति ends in पति as उत्तरपद।

मित—। "प्राग्दीव्यतोण्" इति सूत्रमत्रानुवर्त्त्य ( अनुकृष्य इत्यर्थः ) आह— "एभ्यः अण् स्यात् प्राग्दीव्यतीयेषु अर्थेषु"। "प्राग्दीव्यतोण्" सूत्रात् आरभ्य

"तेन दीव्यति—" सूत्रं यावत् ये अपत्यादि— शैषिकान्त्यर्थाः विहिताः ते सर्वेऽपि प्राग्दीव्यतीयाः अर्थाः। [दीव्यतः प्राक् इति प्राग्दीव्यत् "अपपरिवहिरञ्चवः पञ्चम्या" इत्यव्ययीभावः। ततो भवार्थे" वृद्धाच्छः" इति छप्रत्यये कृते प्राग्दीव्यतीय-शब्दः लभ्यते]। एषु अर्थेषु अश्वपत्यादिभ्यः अण् स्यात्, न तु पत्युत्तरपदत्वात् (सूत्र १०७७) ण्य-प्रत्ययो भविष्यति, अतः आह—"वक्ष्यमाणस्य ण्यस्यापवादः" ॥ अश्वपत्यादिगणो यथा—अश्वपति, स्थानपति, ज्ञानपति, यज्ञपति, बन्धुपति, शतपति, धनपति, गणपति, राष्ट्रपति, कुलपति, गृहपति, पशुपति, धान्यपति, धर्मपति, धन्वपति, सभापति, प्राणपति, क्षेत्रपति ॥ अधुना अश्वपति + अण् इति स्थिते आह—

१०७५। तद्धितेष्वचामादेः। ७।२।१७॥

**दी—। ञिति णिति च तद्धितपरे अचामादेरचो वृद्धिः स्यात्॥**

वृद्धि is ordered of the first vowel of a word when Taddhita affix having indicatory ञ् or ण् follows. Thus अश्वपति + अण् is to give first अश्वपत् + अण् by the rule "यस्येति च" (see under Vol I sutra 311), ; now by the present sutra we get आश्वपत with वृद्धि of the first vowel in अश्वपत्।

मित—। "अचोञ्णिति" इति सूत्रमनुवर्त्तते। "मृजेर्वृद्धिः" इति सूत्रात् "वृद्धिः" वर्त्तते। "अचाम्" इति निर्द्धारणे षष्ठी। ततः आह—"ञितिणिति च तद्धितपरे अचां मध्ये आदेः अचो वृद्धिः स्यात्"। अश्वपति + अण् इति "यस्येतिच" सूत्रेण इकारलोपे अश्वपत् + अण् इति जाते, वर्त्तमानसूत्रेण वृद्धौसत्याम् अश्वपत् + अण् = आश्वपतम् इति स्थितम्।

१०७६। किति च। ७।२।११८॥

**दी—। किति तद्धिते च तथा (आदेरचो वृद्धिः स्यात्)॥ अश्वपतेरपत्यादि आश्वपतम्। गाणपतम्। "गाणपत्यो मन्त्रः" इति प्रामादिकमेव।**

Similarly the first vowel of a word gets वृद्धि when a ञ—इत् (ञ्-eliding) तद्धितप्रत्यय follows. Now अश्वपति + अण् in the sense तस्य अपत्यम् &c. gives आश्वपतम् as seen above. Similarly we get गाणपतम्। As गणपति is to take अण् by the rule "अश्वपत्यादिभ्यश्च" in प्राग्दीव्यतीयार्थ, so the form "गाणपत्यः मन्त्रः" with ण्य is erroneous.

मित—। सुगमा ॥ "किति च" इति सूत्रं वर्त्तमानत्वेऽ अनुपयुक्तमपि तद्धितानुरोधात् इह एव उपन्यस्तम्। गणपतिशब्दस्य अश्वपत्यादिगणे पाठात् गणपतिर्देवतास्य मन्त्रस्य इत्यर्थे तु अणाभाव्यम्, न तु ण्यः ; अतः "गाणपत्यः मन्त्रः" इत्यादि प्रयोगस्तु एतस्मिन्नर्थे प्रामादिक एव। किन्तु अर्थविशेषे "गाणपत्यः मन्त्रः" इति प्रयोगः सुसाधुः। गणपतिशब्दः ब्राह्मणादिगणेऽपि पठ्यते, ततः गणपतेः गणेशस्य कर्म इत्यर्थे गणपति + ष्यञ् = गाणपत्यः भवति। तदा अर्थस्त्वेवम्—यमेव मन्त्रम् गणपतिः कर्मत्वेन उपास्ते, सएव चेत् मन्त्रः अन्येन उपास्यते तदा स मन्त्रः "गाणपत्यः मन्त्रः" वक्तुं शक्यते।

१०७७। दित्यदित्यादित्य-पत्युत्तरपदाण्ण्यः। ४।१।८५ ॥

दी—। दित्यादिभ्यः पत्युत्तरपदाच्च प्राग्दीव्यतीयेषु अर्थेषु ण्यः स्यात् ; अणोऽपवादः। दैत्यः। अदितेः आदित्यस्य वा आदित्यः। प्राजापत्यः। "यमाच्चेति काशिकायाम्" (वा) —याम्यः। "पृथिव्या ञाञौ" (वा)—पार्थिवा, पार्थिवी। "देवाद् यञञौ" (वा)—दैव्यम्, दैवम्। "बहिषष्टिलोपो यञ् च"(वा)—बाह्यः। "ईकक् च"—बाह्यीकः। "स्थाम्नोऽकारः" —अश्वत्थामः ; पृषोदरादित्वात् सस्य तः। "भवार्थे तु लुग्-वाच्यः"—अश्वत्थामा। "लोम्नोऽपत्येषु बहुषु अकारः" (वा), बाह्वादि—इञोऽपवादः। उडुलोमाः—उडुलोमान्। 'बहुषु' किम् ? औडुलोमिः ॥ "गोरजादिप्रसङ्गे यत्"—गव्यम्। अजादि प्रसङ्गे किम् ? गोभ्यो हेतुभ्य आगतं, गोरूप्यम्—गोमयम् ॥

The affix ण्य comes after the words दिति, अदिति, आदित्य and words having पति as उत्तरपद (final word), in प्राग्दीव्यतीय senses. This bars the usual अण् by the rule no 1073. Thus दिति + ण्य = दैत्य (with इल्लोप by "यस्येति च" and आदि वृद्धि by 1075), similarly we get अदिति or आदित्य + ण्य = आदित्य: &c. Acc. to Kasika यम takes ण्य yielding याम्य। The word पृथिवी takes ञ and अञ् in प्राग्दीव्यतीय अर्थ ( as usual ) yielding पार्थिवा (with ञ् and टाप् added in fem.) and पार्थिवी (with अञ् and ङीप् in fem. by "टिड्ढाणञ्—"); Here fem. forms are shown to show the diff. with ञ and अञ्। The word देव takes यञ् and अञ् in प्राग्दीव्यतीय senses, yielding दैव्यम् and दैवम्। The अव्यय word बहिस् in the senses of तत्र भव: etc takes the affix यञ् and then its टि portion elides yielding बहिस् + यञ् = बह् + य = बाह्य ( with आदिवृद्धि)। बहिस् also takes ईकक् in प्राग्दीव्यतीय senses and then the form is बाहीक ( with टि-लोप as before and आदिवृद्धि by "किति च" )। The word स्थामन् takes the affix अकार in प्राग्दीव्यतीय senses. The instance अश्वत्थाम: ( with the affix अ ) here shows that here there is तदन्तविधि even in case of प्रत्ययविधि ; again in अश्वत्थाम, the intial स of स्थाम becomes त by पृषोदरादि। Remember that this affix "अ" elides after अश्वत्थामन् in the sense of "भव" (existence). Thus the form then is अश्वत्थामा। The word लोमन् final elides its affix "अ" when many अपत्य ( offspring ) are siginfied. This bars बाह्वादि—इञ् in बहुवचन after उडुलोमन्। So we get उडुलोमा: &c. Why do you say बहु here ? Witness औडुलोमि in singular, where there is इञ् and not अकार। The word गो in all senses takes यत् when a अजादि प्रत्यय (affix beginning with a vowel ) is

to follow. Thus गोः आगतम् = गव्यम् ( with यत् in supercession of अण् ); why do you say अजादिप्रसङ्गे here? Witness गोभ्यः हेतुभ्यः आगतम् इति गोरूप्यम् and गोमयम्; here the affix is रूप्य and मयट् by "हेतुमनुष्येभ्योऽन्यतरस्याम्" and "मयड् वैतयोः—गोश्च पुरीषे" &c. and in these cases there being no occasion ( प्रसङ्ग ) of an अजादि affix यत cannot come in, and we get—गोरूप्यम् &c.

मित—। दिति, अदिति, आदित्य—पतिः उत्तरपदं यस्य तस्मात्—शब्दात् च ण्य-प्रत्ययो भवति प्राग्दीव्यतीयेषु अर्थेषु। "प्राग्दीव्यतोऽण्" इति अनुवर्त्तनप्राप्तम् अणं बाधित्वा ण्य एव स्यात्, अत आह—"अणोपवादः"। दिति + ण्य = दित् + ण्य ( "यस्येतिच" इति दितिशब्दस्य इकारलोपः ) = दित् + य ( ण-कार इत् ) = दैत्यः ( आदिवृद्धिः ); एवम् आदित्यः, प्राजापत्यः इत्यादि। काशिकायाम् यमशब्दात् प्राग्दीव्यतीये अर्थे ण्यः विहितः। पृथिव्या अपत्यादि-अर्थे ञ-अञौ प्रत्ययौ भवतः। प्रत्ययोः स्त्रियामेव विशेषः इति दर्शयितुमाह—पार्थिवा ( ञे सति अदन्तत्वात् टाप ) —पार्थिवी ( अञि सति "टिड्ढाणञ—" इति सूत्रेण ङीप् )। अत्रोक्ताः सर्वे प्रत्ययाः प्राग्दीव्यतीयेषु एव भवन्ति। देवस्य अपत्यादि अर्थे दैव्यम् ( यञ् ) —दैवम् ( अञ् )। 'बहिस्' इति अव्ययात् यञ्, यञिसति अस्य टि-भागलोपश्च ततो बाह्यः इति। अत्र इदमवधेयम् "अव्ययानां भमात्रे टिलोपः"—इत्यस्य अनित्यत्वज्ञापनमिह टिलोपविधानफलम्, तेन आरात्भव इति आरातीय इत्यादि सिध्यति"—इति बालमनोरमा। बहिषः ईकक्ति सति टिलोपः, "किति च" इति आदिवृद्धौ च "बाहीकः" इति॥ स्थामन्-शब्दात् प्राग्दीव्यतीये अर्थे अकारप्रत्ययो वक्तव्यः इत्यर्थः। अत्र "अश्वत्थामः" इत्युदाहरणात् भाष्येऽपि तथा स्थितत्वात् अत, प्रत्ययविधित्वेऽपि तदन्तविधिर्बोध्यः। अश्वस्य इव स्थाम बलं ( स्थितिर्वा ) यस्य इति अश्वत्थामन्, पृषोदरादित्वात् 'स्थामन्' इत्यस्य सकारस्य तकारः स्यात्। ततः अप्रत्यये सति अश्वत्थामः इति। भवार्थे तु अकारप्रत्ययस्य लुग् वक्तव्यः— अश्वत्थामा इति॥ लोमन्शब्दात् उत्तरपदात् बहुषु अपत्येषु वाच्येषु—अकारः स्यात्, न तु बाह्वादिलक्षण इञ्, अत आह "बाह्वादि—इञोऽपवादः"।

उडुलोमन् + अ ( बहुवचन ) = उडुलोमाः ( "नस्तद्धिते" इति टिलोपः ) इत्यादि ॥ असत्यां बहुत्वविवक्षायां औडुलोमिः ( इति बाह्वादि इञ् ); अतः आह "बहुषुकिम्—औडुलोमिः" ॥ गो-शब्दात् अजादिप्रत्ययस्य प्रसङ्गे सति 'यत्' स्यात्। अत्र 'सर्वत्र'—ग्रहणं तु पूर्ववार्त्तिकस्थमपत्यार्थं निवारणार्थम् इति बोध्यम्, गविभवम् इति अजादिप्रत्यये अणि विहिते सति 'यत्'—ततः गव्यम् इति। असति अजादि-प्रत्यये, "हेतुमनुष्येभ्योऽन्यतरस्याम्" इतिरूप्यप्रत्यये, तथा "मयट्च" इतिमयटि च सति, प्रत्ययस्य अजादित्वाभावात् यत् न स्यात्, अत आह—"अजादि प्रसङ्गे किम् ? गोभ्य हेतुभ्य आगतम्—गोमयम्"। प्रत्ययस्य हलादित्वात् एतत्स्थाने वार्त्तिकवलेन 'यत्' न स्यात् ॥

१०७८। उत्सादिभ्योऽञ्। ४।१।८६ ॥

**टी—। औत्सः। "अग्निकलिभ्यां ढक् वक्तव्यः" ( वा )—अग्नेरपत्यादि—आग्नेयम्। कालेयम्।**

The affix अञ् comes after words of the उत्सादि list in प्राग्दीव्यतीय senses. The words अग्नि and कलि however take ढक् yielding आग्नेय &c.

मित—। प्राग्दीव्यतीयेषु अर्थेषु इति वर्त्तते। ततः क्रमप्राप्तमणं वाधित्वा उत्सादिशब्देभ्यो अञ् स्यात्। उत्सादि यथा—उत्स, उदपान, विकिर विनद, महानद, महानस, महाप्राण, तरुण, तलुन, वष्कयासे (i. e., वष्कयशब्दः 'असे' असमासे सति अतपठ्यते), धेनु, पृथ्वी, पङ्क्ति, जगती, त्रिष्टुप, अनुष्टुप, जनपद, भरत, उशीनर, ग्रीष्म, पीलु, कुण, उदस्थान देश, पृषदंश, भल्लकीय, रथन्तर, मध्यन्दिन, वृहत्, महत्, सत्वत्, कुरु, पञ्चाल, इन्द्रावसान, उष्णिह, ककुभ, सुवर्ण, देव; ग्रीष्मादच्छन्दसि—इत्युत्सादि ॥ केचिदत्र 'पृथा'—शब्दमपि पठन्ति, तेन अञा 'पार्थ' भवति इत्याहुः ॥

कथं माध्यन्दिनमिति ? भाषायां तु "मध्योमध्यं दिनण् चास्मात्" इति मध्यशब्दात् भवार्थे दिनण्प्रत्यये, इहैव निपातनात् मध्यशब्दस्य 'मध्यम्'-भावे सति

सिध्यति इति। यद्वा—दिनस्य मध्यम् इति, ततः मध्यन्दिनम् उत्सादिगण-पाठात् निपातनात् सिद्धम्। पश्चात् भवाद्यर्थे अञि सति माध्यन्दिनम् इति एतां गणोक्तां 'ग्रीष्मादयच्छन्दसि' इति छान्दसप्रक्रियामपि केचित् भाषायां पठन्ति। अस्मिन् पक्षे एव—असति अञि, "मध्यन्दिने अर्धरात्रे वा" इत्यादि मनुप्रयोगः उपचारात् सङ्गच्छते, अन्यथा भाषायां ( प्रथमपक्षे ) मध्य+दिनण् = माध्यन्दिनम् इति हियुक्तं स्यात्, यथा "माध्यन्दिनसवनाय तमसामनुप्रपन्नः" इति उत्तरे।

इत्यपत्यादिविकारान्तार्थ-साधारणाः प्रत्ययाः॥

**अधुना अपत्याधिकारप्रकरणमाह—**

**१०७९। स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्।४।१।८७॥**

**टी—। "धान्यानां भवने—" ( १८०२ ) इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमात् नञ्-स्नञौ स्तः। स्त्रैणः, पौंस्नः। वत्यर्थे न; "स्त्रीपुंवच्च" ( सूत्र ९३२ ) इति ज्ञापकात्—स्त्रीवत्, पुंवत्।**

The words स्त्री and पुंस् respectively take the तद्धित affixes नञ् and स्नञ् after these in all the senses enumerated henceforth up to the sutra 'धान्यानां भवने"—No 1802. Thus स्त्री + नञ् = स्त्रैणः ( with आदिवृद्धि ), similarly पौंस्नः। But in the sense of the affix वति ( comp. "तेन तुल्यं क्रिया चेद्वतिः") नञ् and स्नञ् do not come after these words, owing to the use of the word "स्त्री पुंवच्च" in the sutra ( 932 ) in—एकशेष (ante). Thus we get स्त्रीवत्, पुंवत्।

मित—। स्त्री च पुमान् च इति "स्त्रीपुंसौ" द्वन्द्वः। "अचतुर-विचतुर—" इत्यादिसूत्रेण समासान्तः अच्। ताभ्याम्; स्त्रीशब्दात् पुंस्शब्दात् च इत्यर्थः। "प्राग्-दीव्यतोऽण्"इति सूत्रात् "प्राक्" अनुवर्तते। ततः आह—"धान्यानां भवने क्षेत्रे खञ्"

इत्यतः प्रागर्थेषु स्त्रीपुंसाभ्यां क्रमात् नञ्-स्नञौ स्तः”। स्त्री + नञ् = स्त्रैण (आदिवृद्धिः णत्वञ्च)। स्त्रिया अपत्यम्, तत्र भवः, तासां समूहः—इत्यादि हि अस्यार्थः ; एवं पौंस्न इति। “कथं स्त्रीत्वं स्त्रीता पुंस्त्वं पुंस्ता’ इति। ‘आ च त्वात्’ इति चकाराद्बाध्यते” इति मनोरमा। अत्र स्नञि सति पुम्स् शब्दस्य पदत्वात् संयोगान्तलोपः, आदिवृद्धिश्च। “तेन तुल्यं क्रियाचेद्वतिः” इति सूत्रविहिते वत्यर्थे स्त्रीपुंशब्दाभ्यां नञ्-स्नञौ न स्तः। कथमेतत् ज्ञायते इत्यत्राह—एकशेषप्रकरणे “स्त्रीपुंवच्च” इति सूत्रे पुंवत् इति सवकारेणैव व्यवहारात् एतत् ज्ञाप्यते, अन्यथा ‘पुंवत्’ इति निर्देशो व्यर्थः स्यात्। अस्य ज्ञापकस्य च सामान्यापेक्षत्वात् स्त्रीशब्दादपि वत्यर्थे नञ् न इति फलितम्—एकयोगे एकत्र दृष्टो न्यायः अन्यत्र प्रयुज्यते बाधकाभावात्, भाष्येऽपि तथा इङ्गितत्वात्॥

**१०८० । द्विगोर्लुगनपत्ये । ४।१।८८ ॥**

**दी । द्विगोर्निमित्तं यस्तद्धितः अजादिः अनपत्यार्थः प्राग्दीव्यतीयः तस्य लुक् स्यात् । पञ्चसु कपालेषु संस्कृतः पुरोडाशः = पञ्चकपालः ॥ ‘द्विगोर्निमित्तम्’ इति किम् ? पञ्चकपालस्येदं खण्डं पाञ्चकपालम् । ‘अजादि’ किम् ? पञ्चगर्गरूप्यम् । ‘अनपत्ये’ किम् ? द्वयोर्मित्रयोरपत्यं द्वैमित्रिः ।**

The Taddhita affix which arises in the matter of a द्विगुसमास (i.e. which conveys the sense of द्विगु) and which begins with a vowel (अजादि) and which does not signify अपत्यार्थ and which has प्राग्दीव्यतीय senses,—elides. Thus we got पञ्चकपाल with elision of अण् done by the rule—“संस्कृतं भक्षाः”। Why do you say “द्विगोर्निमित्तम्” in the vritti ?—witness पाञ्चकपालम् with अण् in the sense “तस्येदम्”। This अण् being not in the matter of द्विगु i. e. here there being no तद्धितार्थद्विगु, it does not elide. Why do you (or we) say “अजादिः” in the vritti ?—witness

पञ्चगर्गरूप्यम् in the sense पञ्चभ्यः गर्गेभ्यः आगतम्। Here there being occasion for तद्धितार्थ द्विगु, the affix still does not elide for it is not an अजादि affix. Why do you ( or-we ) say अनपत्ये in the vritti ? Witness द्वैमित्रिः in the matter of तद्धितार्थद्विगु ; here the affix does not elide, for the sense is अपत्य, whereas we want अनपत्यार्थ तद्धित here in the rule.

मित—। "द्विगोः" इति निमित्तसम्बन्धे षष्ठी, 'तद्धितस्य' इत्यनेन अन्वितम्। "तद्धितार्थोत्तरपद समाहारे च" इति सूत्रेणैव पूर्वं तद्धितविषये द्विगुरभिहितः एव। अत आह—"द्विगोर्निमित्तं यः तद्धितः तस्य लुक् स्यात्।" "प्राग्दीव्यत" इति वर्त्तते, ततः च वृत्तौ "प्राग्दीव्यतीयः" उक्तः। "गोत्रे लुगचि" इति उत्तरसूत्रात् "अचि" अपकृष्यते [ उत्तरसूत्रात् पूर्वसूत्रे आकर्षणम् आनयनमेव अपकर्ष इति प्रागुक्तम् ], तच्च पञ्चम्यन्तं सत् 'तद्धितस्य' इत्यस्य विशेषणम् ; अत आह— "यः तद्धितः अजादिः" इत्यादि॥ तद्धितविषये द्विगोः उदाहरणं यथा—पञ्चसु कपालेषुसंस्कृतः पुरोडाशः इति "संस्कृतं भक्षाः" इतिसूत्रेण तद्धितार्थद्विगुविषये अणि प्राप्ते वर्त्तमानसूत्रेण तस्य लुक् स्यात्। वृत्तौ "द्विगोर्निमित्तम्" इति कथमुक्तम् ? तद्धितार्थविषयादन्यत्र "तस्येदम्" इत्यादि अर्थे प्रत्ययस्य लुक् यथा न स्यात् ; ततः पञ्चकपालस्य इदम् इति पञ्चकपाल + अण् = पाञ्चकपालम्। 'अजादिः' कथं वृत्तौ अन्तर्भुक्तम् ? पञ्चभ्यः गर्गेभ्यः आगतम् इत्यर्थे "हेतुमनुष्येभ्योऽन्यतरस्याम्" इति सूत्रविहितरूप्यप्रत्ययः तद्धितार्थयुक्तः अपि अजादित्वाभावात् न लुप्तः। वृत्तौ 'अनपत्ये' कथमुक्तम् ? अपत्यार्थे द्विगौ प्रत्ययः ( इञ् ) अजादिरपि यथा लुप्तो न स्यात्, 'द्वयोर्मित्रयोरपत्यं द्वैमित्रिः इत्यादि च यथा सिध्येत्॥

## १०८१। गोत्रेऽलुगचि ।४।१।८९॥

**दी—। अजादौ प्राग्दीव्यतीये विवक्षिते गोत्रप्रत्ययस्य अलुक् स्यात्। गर्गाणां छात्राः। "वृद्धाच्छः"॥**

An affix denoting गोत्रार्थ and which is to elide by such rules as "यस्कादिभ्योगोत्रे," does not elide when again an अजादि Tadd-

hita is to follow and has प्राग्दीव्यतीय sense. Thus गर्गस्य गोत्रापत्यम् =गार्ग्यः with यञ् by—गर्गादिभ्यो यञ्। This यञ् elides in the plural by "यञञोश्च" and the form in the plural is गर्गाः। Then in the sense गर्गाणां (i. e. बहुगर्गाणां) छात्राः, "छ-प्रत्यय" is due by the rule "वृद्धात् छः" (गार्ग्य being a word beginning with a वृद्धि vowel "आ" ।—This छ is = ईय)। So अजादि प्राग्दीव्यतीय तद्धित affix following on, the गोत्रार्थप्रत्यय i. e. यञ् after गर्ग (which elided in the plural) will not elide by this present rule when ईय follows. Thus the form now is गार्ग्य+ईय or गार्ग्य्+ईय and we look forward—

मित—। गोत्रे+अलुक्+अचि इति छेदः। "प्राग्दीव्यतः" इति वर्त्तते, ततः प्राग्दीव्यतीये प्रत्यये इति अर्थो भवति। "अचि" इति तस्य विशेषणम्; ततः आह "अजादौ प्राग्दीव्यतीये विवक्षिते अलुक् स्यात्"। कस्य अलुक् भवेत्? इत्याह—"गोत्रे" वर्त्तमानस्य प्रत्ययस्य, गोत्रार्थकप्रत्ययस्य इति यावत्, अलुक् स्यात्। "यञञोश्च", "यस्कादिभ्यो गोत्रे"—इत्यादि सूत्रेण येषां गोत्रप्रत्ययानां लुक् विहितः, तेषाम् एव अजादौ प्राग्दीव्यतीये विषयभूते अलुक् कथ्यते इति सूत्रनिष्कर्षः। एवम् गर्गस्य गोत्रापत्यं गार्ग्यः ("गर्गादिभ्यो यञ्") इति यञ्, अस्य बहुत्वविवक्षायाम् "यञञोश्च" इति सूत्रेण यञो लुक् उक्तः, ततः "गर्गाः" इति भवति। अधुना—गर्गाणां (बहुगार्ग्याणाम् ? इत्यर्थः) छात्राः इत्यर्थे, "वृद्धाच्छः*" इति सूत्रेण प्राग्दीव्यतीये (छ-प्रत्ययस्य आदेशभूते) ईय-रूपे अजादौ विवक्षिते, वर्त्तमानसूत्रेण गोत्रप्रत्ययस्य "यञ्"—इत्यस्य अलुकि सति, गार्ग्य+ईय इति स्थिते, 'यस्येति च' सूत्रेण अकारलोपे गार्ग्य्+ईय इति जाते आह—

१०८२। आपत्यस्य च तद्धितेऽनाति।६।४।१५१॥

टी। हलः परस्य अपत्य-यकारस्य लोपः स्यात् तद्धिते परे न

[* यस्य समुदायस्य अचां मध्ये आदिः वृद्धिः तद्वृद्धसंज्ञं स्यात्]।

**तु आकारे। गार्गीयाः। प्राग्दीव्यतीये किम्? गर्गेभ्यो हितम् गर्गीयम्। अचिकिम्? गर्गेभ्यो आगतं गर्गरूप्यम्।**

The अपत्य-यकार affix which comes after a हल् letter (i.e. a consonant) elides when a further Taddhita affix follows, but not if an affix bengininig with आकार follows. Thus गार्ग्य + ईय = गार्ग्+ईय (by यस्येतिच) = गार्गीय (with यलोप by the present rule); why do we say प्राग्दीव्यतीये in the vritti?—Witness गर्गेभ्यो हितम् गर्गीयम्। Here the rule "तस्मै हितम्" directs (ईय) after गर्ग (=बहुगार्ग्य) but it is outside प्राग्दीव्यतीय senses, so here the गोत्रप्रत्यय यञ् elides, and is not retained as in प्राग्दीव्यतीय senses. Why do we say अचि in the sutra "गोत्रे लुगचि"? Witness गर्गरूप्यम्, here रूप्य-प्रत्यय being not अजादि, the गोत्रप्रत्यय यञ् elides by "यञञोश्च" and is not retained (as in the case of गार्गीयाः)।

मित—। "ढ्रलोपोऽकद्राः" इति सूत्रात् 'लोपः' इति, "सूर्य्यतिष्य—"इति सूत्रात् 'य' इति च षष्ठ्यन्तं सत् अनुवर्त्तते। "हलस्तद्धितस्य" इति सूत्रात् 'हलः' इति पञ्चम्यन्तमनुवर्त्तते। 'अपत्यस्य' अपत्यप्रत्ययविषयकस्य इदम् इति 'आपत्यम्' (अण्), तस्य। इदं 'य-कारस्य' इत्यस्य विशेषणम्। ततः आह—हलः परस्य आपत्य-यकारस्य लोपः स्यात् तद्धिते परे, न तु आति परे—आकारयुक्ततद्धितप्रत्यये परे इत्यर्थः। एवं सति गार्ग्य + ईय = गार्गीयाः इति अनेनसूत्रेण य-लोपे सति सिध्यति। पूर्वसूत्रे 'प्राग्दीव्यतीये' इति कथमुक्तम? "तस्मै हितम्" इति सूत्रविहितप्रत्ययस्य प्राग्दीव्यतीय-बहिर्भूतत्वात् हितार्थे गार्ग्य + छ (ईय) इति कृते गोत्रार्थकयञ् प्रत्ययस्य "यञञोश्च" इति लुग्च, न तु अलुक्। पूर्वसूत्रे 'अचि' इति कस्मात् उक्तम्? अनजादौ प्राग्दीव्यतीये सति अपि "यञञोश्च" इति गोत्रार्थप्रत्ययस्य लुगेव यथा स्यात्। ततः गर्गेभ्यः आगतम् इति यञ्लोपे गर्गरूप्यम् एव भवति।

१०८३। यूनि लुक ।४।१।९०॥

दी—। प्राग्दीव्यतीये अजादिप्रत्यये विवक्षिते युवप्रत्ययस्य लुक् स्यात्। ग्लुचुकस्य गोत्रापत्यं ग्लुचुकायनिः। वक्ष्यमाणः फिन्। ततो यूनि अण्=ग्लौचुकायनः। तस्य छात्रोऽपि ग्लौचुकायनः। अणो लुकि वृद्धत्वाभावात् छो नः।

An affix ( तद्धितप्रत्यय ) denoting युवार्थ elides when a further अजादि affix ( तद्धित ) having प्राग्दीव्यतीय sense is to follow or is mentally wished to be added on. Thus ग्लुचुकस्य गोत्रापत्यम् gives ग्लुचुकायनिः ( with फिन् i. e. आयनि by the rule "प्राचामवृद्धात् फिन् बहुलम्" ); Then तस्यापत्यं युवा gets अण् by "प्राग्दीव्यतोऽण्", and the form is ग्लौचुकायनः। Now in the sense तस्य छात्राः, the युवप्रत्यय i.e. अण् here elides by the present rule giving ग्लुचुकायनि as before; then adding अण् (छात्रार्थे) we get finally ग्लौचुकायनः। Now the question may arise that if the final is the same with or without elision of युवार्थकप्रत्यय,* then why this mention for elision of युवार्थकप्रत्यय ? On this the answer is given by Bhattoji —if elision of युवार्थकप्रत्यय is not mentioned then ग्लौचुकायनः (with—यूनिअण्) will take छ in the sense तस्य छात्राः by "वृद्धात् छः", for ग्लौचुकायन begins with a वृद्धि vowel (i.e. औ ), whereas by saying "elision of युवप्रत्यय when a further affix is to be added", we get ग्लुचुकायनि ( with—elision of युवार्थकप्रत्यय i. e. अण् ) and then this अण् being elided ग्लुचुकायनि is not

---

* See rules 'अपत्यं पौत्रप्रभृति गोत्रम्' and "जीवति तु वंश्ये युवा" for meanings of गोत्रसंज्ञा and युवसंज्ञा in तद्धित ; comp. वंश्ये पित्रादौ जीवति पौत्रादेः यदपत्यं चतुर्थादि तद् युवसंज्ञं न तु गोत्रसंज्ञम्॥

a वृद्ध word ( for its first vowel is now no longer a वृद्धि vowel ) and so we do not get छ here by the rule "वृद्धाच्छः" ; thus Bhattoji has "अणोलुकि वृद्धत्वाभावात्छोन" । Hence the necessity of saying—elision of युवार्थ प्रत्यय here by this rule.

मित। अत्र 'प्राग्दीव्यत' इत्याद्यनुवृत्तिरस्ति पूर्वसूत्रवत्। ततः आह—"अजादौ प्राग्दीव्यतीये प्रत्यये विवक्षिते ( बहिरङ्गे अनुत्पन्न एव ) युवप्रत्ययस्य लुक् स्यात्"। उदाहरणं यथा—ग्लुचुकस्य गोत्रापत्यमिति ग्लुचुकायनिः, "प्राचामवृद्धात् फिन् बहुलम्—" इति सूत्रेण फिन्। तत आह—"वक्ष्यमाणः फिन्"। ततः तस्य अपत्यं युवा इत्यर्थे "प्राग्दीव्यतोऽण्" इति सूत्रेण —अण् स्यात् ततः ग्लौचुकायनः इति, अतः भट्टोजिराह—"ततो यूनाण्" इत्यादि। तस्य छात्रः इत्यर्थे विवक्षिते एव युवार्थकप्रत्ययस्य अणोलुक् स्यात्, ततः ग्लुचुकायनिः इति जायते, अधुना छात्रार्थकस्य अण्-प्रत्ययस्य पुनः प्राप्तौ ग्लौचुकायन इति भवति। ननु युवप्रत्यये अलुप्तेऽपि ग्लौचुकायन एवस्यात् तत् कथं "यूनिलुक्" इत्यनेन युवार्थकप्रत्ययस्य लुक् विहितः ? अत्रोत्तरमाह—युवप्रत्ययस्य अलुकि सति, 'ग्लौचुकायन'—शब्दस्य प्रथमाचः वृद्धत्वात् 'तस्य छात्रः' इत्यर्थे 'वृद्धाच्छः' इति छः भविष्यति, ततो ग्लौचुकायनीय इति अनिष्टमापद्येत ; किन्तु लुकि उक्तं युवप्रत्ययस्य अणो लुप्तत्वात् 'ग्लुचुकायनि' शब्दस्य वृद्धत्वाभावात् छः न स्यात्, किन्तु अण् भवेत्, ततः इष्टम् ग्लौचुकायनपदं लभ्यते। अतः दीक्षित आह—"अणो लुकि वृद्धत्वाभावात् छो न"। युवप्रत्ययस्य लुग्विषये सूत्रान्तरमाह—

१०८४। पैलादिभ्यश्च ।२।४।५९॥

दी—। एभ्यो युवप्रत्ययस्य लुक्। "पीलाया वा" (सूत्र ११२१) इत्यण्। तस्मात् "अणो द्व्यचः" ( सूत्र ११८० ) इति फिञ्। तस्य लुक्। पैलः पितापुत्रश्च। "तद्राजाच्चाणः" —( गणसूत्रम् )। "द्व्यञ्मगध—" इत्यणन्तात् आङ्गशब्दात् "अणोद्व्यचः" इति फिञोलुक्। आङ्गःपिता पुत्रश्च।

The युवार्थक affix elides, after words of the पैल class. Thus पील्लाया गोत्रापत्यम् gives पैल: (with अण by the rule "पीलाया वा"—1121—in supercession of the general rule "स्त्रीभ्यो ढक्" )। Then पैलस्य अपत्यं युवा is to yield पैल+फिञ् by the rule "अणो द्व्यचः" (Sutra 1180) ; but this फिञ् ( युवप्रत्यय ) elides by the present rule giving the form पैल as before. So both पिता ( father ) and पुत्र (son) are called पैल। The पैलादि list (as given under Tika here) says that the युवप्रत्यय after अण् the तद्राज affix —(i.e. a तद्धित affix i.e. अञ् अण &c. having sense of both तस्यापत्यं and तेषां राजा is called तद्राज affix by the rule "ते तद्राजाः") —elides. Thus अङ्गानां अपत्यं वा राजा gives अङ्ग+अण (by the rule "द्व्यञ्मगधकलिङ्गसूरमसादण्") आङ्गः, अस्य युवापत्यम् is to take फिञ by "अणो द्व्यचः"। Now the ganasutra "तद्राजाच्चाणः" under this पैलादि list declares elision of युवप्रत्यय i. e. फिञ after this आङ्ग। So the final form with युवप्रत्यय sense is आङ्ग as well. So Bhattoji as before says "आङ्गः पिता पुत्रश्च" i.e. आङ्ग means and is applied to both father and son.

[N. B.—Note that this पैलादि in not a closed list ].

मित- -। "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः" इत्यतः "यूनि लुक" इत्यनुवर्त्तते। अतः 'पैलादिभ्यः परस्य युवप्रत्ययस्य एव लुक्' इत्यर्थो जायते। उदाहरणं यथा—"पील्लाया गोत्रापत्यं इत्यर्थे 'स्त्रीभ्यो ढक्' इति ढकं बाधित्वा 'पील्लाया' वा इत्यण् भवति"—( बालमनोरमा )। ततः—'पैल' इति जायते। अस्मात युवप्रत्यये सति "अणो द्व्यचः" इति फिञ् ( आयनि ) प्राप्नोति। वर्त्तमान-सूत्रेण अस्य प्रत्ययस्य लुकि सति—(युवप्रत्ययार्थे ) 'पैल' एव भवति। अतः भट्टोजिः प्राह—"पैलः पिता पैलःपुत्रश्च"। पैलादिगणे एव सूत्रमस्ति—"तद्राजाच्चाणः"—तद्राजप्रत्ययात् अणः परस्य युवार्थकप्रत्ययस्य लुक स्यात् इति। किंच तद्राज-

प्रत्ययाः ? "जनपदशब्दात् क्षत्रियात् अञ्" सात्वपनेय·········तथा राजन्यप्येवम्"
—इति अपत्ये राजनि च अर्थे, क्षत्रियवाचकात् तथा जनपदवाचकात् शब्दात् ये अञ्
—अण्—प्रभृतयः उक्तादिसूत्रेण विहिताः तएव तद्राजाः ; "ते तद्राजाः" इति हि
सूत्रम्। एवं सति अङ्गानां अपत्यं राजा च इत्यर्थे अण प्राप्नोति—"द्व्यञ्मगधकलिङ्ग-
सूरमसात् अण्"इति सूत्रेण। ततः 'आङ्ग' इतिरूपं लभ्यते। अस्य युवार्थे "अणोद्व्यचः"
इति फिञि प्रकृते सति वर्त्तमानसूत्रेण तस्य लुक्। ततः युवार्थकप्रत्ययेपि आङ्ग एव
जायते। अतः भट्टोजिराह—"आङ्गः पिता पुत्रश्च"।

पैलादि यथा—पैल, शालङ्कि, सात्यकि, सात्यकामि, राहवि, रावणि, औदञ्चि,
औदव्रजि, औदमेघि, औदमज्जि, औदभृज्जि, दैवस्थानि, पैङ्गलौदायनि, राहक्षति,
भौलिङ्गि, राणि, औदन्यि, औदगाहमानि, औज्जिहानि, औदशुद्धि, तद्राजाश्चाणः।
आकृतिगणोयम्॥

अत्रगणे पैलशब्दं वर्जयित्वा सर्वे शब्दा इञन्ताः। तेभ्यः "इञः प्राचाम" इति
उत्तरसूत्रेण लुकिसिद्धे अत्र पाठो व्यर्थः इति चेत् ? नैवम्। यतः उत्तरसूत्रं
"प्राचां गोत्रार्थे एव लुक् स्यात्" इति विहितम्। अत्र तु "अप्राचां गोत्रार्थेपि यथा
स्यात् तदर्थं एते इञन्ताः पठिताः—इति समाधेयम्"।

१०८५। इञः प्राचाम् ।२।४।६०॥

**टी—। गोत्रे य इञ् तदन्तात् युवप्रत्ययस्य लुक् स्यात्, तच्चेद् गोत्रं प्राचां भवति। पन्नागारस्य अपत्यम्—"अत इञ्", "यञिञोश्च" इति फक् (तस्य लुक्?)—पान्नागारिः पिता पुत्रश्च। प्राचाम् किम् ? दाक्षिः पिता, दाक्षायणः पुत्रः।**

The word having the affix इञ् in the sense of गोत्र after it, has its युवप्रत्यय elided after it, if again that गोत्र refers to one of प्राग्देश। Thus पन्नागार refering to one of प्राग्देश, takes इञ् in the sense of गोत्रापत्य by the rule "अतः इञ्" yielding the form पान्नागारिः। Then the युवप्रत्यय to be added to it is फक् by the

rule "यञिञोश्च"; but this फक् elides by the persent rule finally giving पान्नागारि as well. So Bhattoji has "पान्नागारिः पिता पुत्रश्च"। Why do we say "प्राचाम्" in the rule ? Witness दाक्षिः पिता with इञ्, and दाक्षायणः पुत्रः with फक् by the rule "यञिञोश्च", for दाक्षि does not refer to प्राग्देशीय गोत्र, and thus लुक् of the युवप्रत्यय by the present rule does not come in.

मित—। 'इञ' इति पञ्चम्यन्तम्। अस्य प्रत्ययत्वे तदन्तग्रहणम्। अर्थतः गोत्रार्थकत्वं लभ्यते। तत आह "गोत्रे च इञ् तदन्तात्"। "ण्यक्षत्रिय—" इति सूत्रात् 'लुक्' अनुवर्तते। तेन अयमर्थमाह—"तदन्तात् युवप्रत्ययस्य लुक् स्यात्"। 'प्राचाम्'—इति गोत्रं विशिनष्टि, व्याख्यानमेवात्र शरणम्। तदाह "तच्चेत् गोत्रं प्राचां भवति"। पन्नागारस्य गोत्रापत्यम् इति पान्नागारिः, "अतइञ्" इति गोत्रापत्ये इञ भवति। अस्य प्रागदेशीय गोत्रत्वात्, अस्मात युवप्रत्यये सति "यञिञोश्च" इति सूत्रेण फक् प्राप्नोति। वर्त्तमानसूत्रेण च तस्य लुक् स्यात्। ततः पान्नागारिः इत्येव लभ्यते। अतः आह—"पान्नागारिः पिता पुत्रश्च"। सूत्रे "प्राचाम्' इति किमर्थमुक्तम् ? दाक्षिः पिता (दक्ष+इञ गोत्रापत्य), किन्तु दाक्षायणः पुत्रः ( दाक्षि+"यञिञोश्च" इति फक् ); अत्र फक् इति युवप्रत्ययस्य लुग् न भवति, यतः दाक्षिशब्दः प्रागदेशीयगोत्रत्वं न बोधयति।

## १०८६। न तौल्वलिभ्यः।२।४।६१॥

**टी—। तौल्वल्यादिभ्यः परस्य युवप्रत्ययस्य लुक् न स्यात्। पूर्वेण प्राप्तः ( निषिध्यते ? )। तुल्वलः—तत इञि फक्। तौल्वलिः पिता—तौल्वलायनः पुत्रः।**

Words of the तौल्वलि class ( having the गोत्र affix इञ् after these) do not elide the युवप्रत्यय to be added after it. This sutra prohibits elision of the युवप्रत्यय that is to take place by the previous rule. Thus तुल्वल+इञ् (गोत्रापत्य)=तौल्वलिः। Then by

"यञिञोश्च" we get तौल्वलायनः with फक् added in the sense of युवप्रत्यय by the present rule, though it refers to a प्राच्य गोत्र ।

मित—। 'तौल्वलिभ्यः' इति बहुवचनेन तौल्वल्यादिगणो लक्ष्यते। तत आह 'तौल्वल्यादिभ्यः परस्य' इत्यादि। तुल्वलो नाम कश्चित् प्राच्यः। तस्य गोत्रापत्यं पुमान् इति तौल्वलिः, "अत इञ्" इतिसूत्रेण। एतदन्तस्य वर्त्तमानसूत्रेण युवप्रत्ययस्य अलुकि सति, तौल्वलि + फक् = तौल्वलायनः, "यञिञोश्च" इति सूत्रेण फक्। अत आह—"तौल्वलिः पिता। तौल्वलायनः पुत्रः"।

तौल्वल्यादिर्यथाः—तौल्वलि, धारणि, पारणि, रात्रणि, दैलीपि, दैवमिति, दैवलि, वार्कलि, नैकाकि, दैवयज्ञि, दैवमति, वाफल्कि, वैल्वकि, वैश्वकि, आनुरोहिति, पौष्करसादि, आनुराहति, आनुति, प्रादोहनि, नैमिश्रि, प्राडाहति, वान्धकि, वैशीति, आसिनासि, आहिंसि, आसुरि, नैमिषि, आसिबन्धकि, पौष्पि, कारेणुपालि, वैकर्णि, वैरकि, वैहति॥

## १०८७। फक्फिञोरन्यतरस्याम् ।४।१।९१॥

**दी। "यूनि लुक" ( सूत्र—१०८८ ) इत्येव पूर्वेण नित्ये प्राप्ते विकल्पार्थं सूत्रम्। कात्यायनस्य छात्राः = कातीयाः— कात्यायनीयाः। यस्कस्यापत्यं—यास्कः। 'शिवाद्यण्'। तस्यापत्यं युवा = यास्कायनिः। "अणो द्व्यचः" इति फिञ्। तस्य छात्राः यास्कीयाः—यास्कायनीयाः।**

The compulsory elision of the युवप्रत्यय that is enjoined by the sutra "यूनि लुक" (No. 1083), is optionally done in the case of the affixes फक् and फिञ् denoting युवप्रत्यय। Thus कतस्य गोत्रापत्यम् gives कात्य with गर्गादि यञ्, then कात्यस्य अपत्यं युवा yields कात्य + फक् = कात्यायनः (by the rule "यञिञोश्च"); now कात्यायनः ends in फक् which is a युवप्रत्यय, so this फक् will optionally elide by this rule, if further तद्धितप्रत्यय is done

after it, as कात्यायनस्य छात्राः इति कातीयाः (with elision of फक् ), and कात्यायनीयाः (without elision of फक् )। Similarly यस्कस्यापत्यम् =यास्कः with अण्, तस्य युवापत्यम् =यास्कायनिः with फिञ् by "अणो द्व्यचः"। Then this फिञन्त word (having युवप्रत्यय ) optionally elides this फिञ् if further तद्धितप्रत्यय is added after it. Thus तस्य छात्राः = =यास्कीयाः with elision of फिञ्, and यास्कायनीयाः without elision of फिञ्।

मित—। "यूनि लुक्" इति पूर्वसूत्रमत्र वर्त्तते ; ततः आह—"यूनि—" इति पूर्वेण नित्ये लुकि प्राप्ते, युवार्थकापत्यप्रत्यययोः फक्फिञोः लुक् वा स्यात् ; अतः सूत्रं "[illegible]"—[illegible]। उदाहरणं यथा—कतस्य गोत्रापत्यम् इति कात्यः ( "गर्गादिभ्यो यञ्" इति यञ )। तस्य युवापत्यम् इति कात्य+फक= कात्यायनः ("यञिञोश्च" इति फक् )। कात्यायनस्य छात्राः इत्यर्थे तु वर्त्तमानसूत्रेण कात्यायनशब्दे यः युवप्रत्ययो वर्त्तते ( यथा फक् ), तस्य विकल्पेन लुक्स्यात्। लुकि तु—कात्यायन+छ ( ईय ) -कात्य+ईय=कात्य्+ईय ( "यस्येति च" इत्यकारलोपः )= कात्+ईय ( "आपत्यस्य च—" इति यलोपः )=कातीयाः। लुगभावे तु कात्यायनीयाः। एवम्—युवार्थक—फक्-प्रत्ययस्य वैकल्पिक लोपमुदाहृत्य तादृशस्य फिञो लुकमुदाहरति—यस्कस्यापत्यम् = यास्कः ( शिवादित्वात् अण् ) ; ततः तस्य युवापत्यम् इत्यर्थे "अणो द्व्यचः" इति फिञ्। अस्मात् तस्य छात्राः इत्यर्थे वर्त्तमानसूत्रेण फिञो लुकि सति यास्कीयाः ( "वृद्धाच्छः" इति छः ), असति लुकि वृद्धत्वात् छे सति यास्कायनीया इति।

· . १०८८। तस्यापत्यम्। ४।१।९२॥

**टी—। षष्ठ्यन्तात् कृतसन्धेः समर्थात् अपत्ये अर्थे उक्ता वक्ष्यमाणाश्च प्रत्यया वा स्युः। उपगोरपत्यम् औपगवः। आदिवृद्धिः अन्त्योपधावृद्धी बाधते।**

The previous and following तद्धितप्रत्ययs are added to the entire षष्ठ्यन्त words syntactically connected with another, in the sense of अपत्य (descendant). See also rule 1072 ; thus उपगोः अपत्यम् gives औपगव ( with अण्—आदिवृद्धि and then अन्त्यगुण by the rule "ओर्गुणः" ) । Now in तद्धित this आदिवृद्धि by the rule "तद्धितेष्वचामादेः" will bar the वृद्धि in the final and in the penultimate vowels, though the प्रत्यय may end in ण् or ञ् and then though अन्त्यवृद्धि may be due by "अचोञ्णिति" etc. Thus in उपगु + अण् we get आदिवृद्धि and then अन्त्यगुण by "ओर्गुणः" and no अन्त्यवृद्धि as well.

मित—। 'तद्धिता' इति, 'प्रत्ययः' 'परः' चाधिकृतम् अस्ति। तच्छब्दस्य सर्वनामतया परामर्शित्वात् उपग्वादिशब्दान् बोधयति। ततः 'तस्य' उपग्वादेः 'अपत्यम्' इत्यर्थे उक्ता वक्ष्यमाणाः तद्धितप्रत्ययाः भवन्ति। कस्माद्भवन्ति ? इत्यपेक्षायामाह—षष्ठ्यन्तात् शब्दात्,—यश्च शब्दः पुनः सामर्थ्यहेतोः प्रथमं सन्धिकार्यं गत्वा, अर्थवच्छब्देन परिणतः आकाङ्क्षाद्यर्थेन च युक्तः—तस्मात् तद्धितप्रत्ययाः भवन्ति। सर्वमेतत् "समर्थानां प्रथमाद्वा" इत्यस्य व्याख्यायाम् स्फुटीकृतम्—तत्रैव द्रष्टव्यम्। एवम् उपगोरपत्यम् इत्यत्र षष्ठ्यन्तात् 'उपगुशब्दात्' प्रत्ययो भवति। ततः अपत्यार्थे अणि कृते "तद्धितेष्वचामादेः" इति आदिवृद्धौ, "ओर्गुणः" इति अन्त्यगुणेचसति 'औपगवः' इति स्यात्। ननु सत्यपि आदिवृद्धौ "ओर्गुणः" इति गुणं बाधित्वा "अचो ञ्णिति" इति सूत्रेण वृद्धिरेवास्तु स्थानभेदेन उभयसम्भावात् इति चेत् ? नैवम्, तद्धितविषये आदिवृद्धिः "अन्त्यवृद्धिम् तथा उपधावृद्धिं बाधते"। कथमेतत् ज्ञातमितिचेत्, तदाह—"अनुशतिकादीनाञ्च" इति सूत्रे उभयोः पदयोः आदिवृद्धिविधानात् ज्ञायते, यत् आदिवृद्धौ सत्याम् उपधावृद्धिः न स्यात्। तदा उभयपदवृद्धिविधानम् व्यर्थम् स्यात्। ततः तक्रकौण्डिन्यन्यायात् "सत्यपि उभयसम्भवे बाधनं भवति" इति भाष्येऽपि स्थितम्। व्याकरणे—अपत्यशब्दार्थस्तु उत्तरसूत्रादौ स्फुटीभविष्यति।

दी—। "तस्येदमित्यपत्येऽपि वाधनार्थं कृतंभवेत्। उत्सर्गः शेषएवासौ वृद्धान्यस्य प्रयोजनम्" ॥—(श्लोकवार्त्तिकम्)॥ योगविभागस्तु। भानोरपत्यं भानवः। कृतमन्धेः किम्? सौत्थितिः। अकृतव्यूहपरिभाषया सावुत्थितिर्माभूत्॥ समर्थ-परिभाषया नेह—वस्त्रमुपगोरपत्यं चैत्रस्य। प्रथमात्किम्? अपत्यवाचकात् षष्ठ्यर्थे माभूत्। 'वा'—ग्रहणात् वाक्यमपि। "दैवयज्ञि—" इतिसूत्रात् 'अन्यतरस्याम्'—ग्रहणानुवृत्तेः समासोऽपि—उपग्वपत्यम्। जातित्वात् ङीष्—औपगवी॥ आश्वपतः। दैत्यः। औत्सः। स्त्रैणः। पौंस्नः।

Now it may be said that the rule "तस्यापत्यम्" is useless, for its sense may be got in the rule "तस्येदम्" (where by इदम् we can draw down अपत्यम् etc.); nor can it be said that the rule"तस्यापत्यम्"is useful with respect to the later sutra"अतइञ्", for then the Sutrakara might unite those two rules into one as "तस्यापत्यमत इञ्"! On this the reply is—that if "तस्यापत्यम्"—sense is included in the rule "तस्येदम्" then with respect to वृद्ध words (i.e. words beginning with a वृद्धि—vowel) the affix will be 'छ' (ईय) by the rule "वृद्धाच्छः" in अपत्याधिकार as well. If again it is said that the rule "वृद्धाच्छः" being in शेषाधिकार (i.e. being in senses other than अपत्य and चतुरर्थ—चतुरर्थ including "तदस्मिन्नस्ति इति देशे तन्नाम्नि", "तेन निर्वृत्तम्", "तस्य निवासः", "अदूरभवश्च") has no application in अपत्याधिकार so let "तस्येदम्" include "तस्यापत्यम्" also and make the sutra useless. Then however the reply is—that अण् coming by the rule

"तस्यापत्यम्" applying in cases other then "अत इञ्", बाह्वादि इञ्, शिवाद्यण्, गर्गादि यञ् &c. falls within शेषाधिकार as well, for शेष is "उक्तात् वा विनियुक्तात् अन्यः शेषः", and then छ will come in cases of वृद्ध words ; So to direct अण् also in cases of वृद्ध words as well the seperate rule "तस्यापत्यम्" is made here apart from "तस्येदम्"। Thus Panini makes two योगs here ; and भानु being a वृद्ध word ( it having a first वृद्धि vowel—आ ) takes अण् in the sense of अपत्य and not छ, yielding भानु + अण् = भानव (by गुण of the final vowel by "ओर्गुणः")। "प्रदीयताम् दाशरथाय मैथिली" &c are आर्षप्रयोग। इञ् yielding दाशरथि should be legitimate here by "अत इञ्"। Why do we say कृतसन्धेः in the vritti of this rule as well as in the rule "समर्थानां प्रथमाद्वा"? Witness—सउत्थित ग्रस्य · सउत्थित सूत्थित ; now सूत्थितस्य अपत्यम् इति सूत्थित + इञ् = सौत्थितिः by "अत इञ्"। Had we not said कृतसन्धेः in the वृत्ति, then in सु + उत्थित + इञ्, we had first to make वृद्धि of the vowel in सु ( it being पद ) and then by सन्धि the form would have been सावुत्थितिः ; nor being अन्तरङ्ग (an internal affair) we are to make सन्धि first and then वृद्धि; for अकृतव्यूहपरिभाषा being still more forceful than अन्तरङ्गविधि might have operated here making वृद्धि first and सन्धि later ( for अकृतव्यूहपरिभाषा see our Vol. I. ) yielding the undesirable form सावुत्थिति। So to avoid this form and to establish the desired result सौत्थितिः we distinctly say "कृतसन्धेः" in our vritti of this rule. The तद्धित प्रत्यय is also to take place when there is सामर्थ्य ( interdepenence &c. ), so in case of वस्त्रमुपगोः अपत्यं चैत्रस्य we cannot get अपत्यप्रत्यय after उपगु, for this word is not related to अपत्यम् but to वस्त्रम् here. Why again do we

say प्रथमात् in the first rule in तद्धिताधिकार ? Because we are to get the affix after the first षष्ठ्यन्त word and not after a अपत्यवाचक प्रथमान्त word ( as उपगुरपत्यम् अस्य देवदत्तस्य—here no अपत्य प्रत्यय will arise after "उपगु" ) । There being "वा" in the first rule here 'optinally we get the वाक्य as well, as उपगोः अपत्यम् (as already said) ; that here समास ( as उपग्वपत्यम् ) is also optionally allowed owing to "अन्यतरस्याम्" coming down in the rule "समर्थानां प्रथमाद्वा" from the rule "दैवयज्ञि—" (1201) see ante. Now again औपगव being a जातिवाचक word ङीप् will come in the feminine yielding औपगवी ( see स्त्रीप्रत्यय under "जातेरस्त्री—") ; similarly अश्वपति + अण् अपत्यार्थे = आश्वपतः by "अश्वपत्यादिभ्यश्च," ; दिति + ण्य ( अपत्यार्थे ) = दैत्यः, उत्स + अञ् अपत्यार्थे = औत्सः, स्त्री + नञ् अपत्यार्थे = स्त्रैणः, पुमस् + स्नञ् (अपत्यें) = पौंस्नः (see ante) etc.

मित—। श्लोकवार्त्तिकमिदम् ॥ ननु "तस्येदम्" इति सूत्रेणैव, "तस्यापत्यम्" इति सूत्रार्थस्य गतार्थत्वात्, कथमत्र सूत्रकारेण व्यर्थं "तस्यापत्यम्" इति पृथक् सूत्रं कृतमिति चेत् ( 'तस्येदम्' इत्यत्र 'इदम्'—पदेन, अस्य 'अपत्येपि' अर्थलाभात् ) —? मैवम् वद—तदा अपत्यार्थेपि "वृद्धाच्छः" इति वृद्धशब्दात् छ-प्रत्ययः स्यात्, यतः 'तस्येदम्' इत्यत्र अव्यवहितपरसूत्रं "वृद्धाच्छः" अस्ति, 'तद्बाधनार्थम्' वृद्धादपि अपत्ये छ-प्रत्ययः यथा न स्यात् एतदर्थम् "तस्यापत्यम्" इति पृथक् सूत्रं 'कृतं' विहितम् भवेत्, अत आह —"बाधनार्थं कृतं भवेत्" । यदि पुनरिदमुच्यते—यत् "वृद्धाच्छः" इति सूत्रस्य शेषाधिकारस्थत्वात् ( अपत्यादिचतुरर्थान्तेभ्यः अन्यः शेषः इति व्याख्यानात्), अपत्यविषये अस्य प्रयोगो नास्ति एव । ततश्च पुनः वृद्धशब्दात् छप्रत्ययबाधनार्थं पृथक् "तस्येदम्" इति सूत्रकरणप्रयोजनं नास्त्येव, तदा समाधानमेवं भवेत्, यथा— "तस्यापत्यम्" इति सूत्रविहितं यदण्, तदपि अदन्तवाह्वादिभिन्नप्रकृतिकत्वात् शेषः 'उक्तात् वा विनियुक्तात् अन्यः शेषः' इति हि न्यायः, अत आह—"उत्सर्गः शेष एवासौ"। एवमपि अत्र शेषाधिकारस्थस्य छ-प्रत्ययस्य प्रसङ्गो भवेत् स च प्रसङ्गः वृद्धशब्द-

विषये एव ; अत आह—"वृद्धान्यस्य प्रयोजनम्"। वृद्धशब्दात् (यस्य आदिः आ-ऐ-औ इति वृद्धिस्वरयुक्तः—स एव वृद्धशब्दः, तस्मात्) अपि अपत्यविषये छ-प्रत्ययो यथा न स्यात् अतः पृथक् सूत्रम् "तस्यापत्यम्" इति सूत्रकारेण विहितम्। अस्मात् हेतोः "तस्यापत्यम्" इति पृथक् योगः विहितः। अतः भट्टोजिराह—"योगविभागम्"। एवं वृद्धात् भानुशब्दात् ( भानुशब्दे प्रथमवृद्धिस्वर 'आ' इति सत्वात् असौ वृद्धशब्दः ) अपत्ये अणेव भवति न तु छ-प्रत्ययः—ततः भानु + अण् = भानो + अण् = भानवः। वृत्तौ "कृतसन्धेः "इति किमर्थम् उक्तम् ? तदाह—सु उथितमसा इति सूत्थितः, तस्यापत्यम् इति सूत्थित + इञ् = सौत्थितिः। अत्र सु + उत्थित इत्यत्र सन्धिं कृत्वा 'सूत्थित'—इति शब्दं साधयित्वा, पश्चात् तद्धितप्रत्ययः यथा स्यात्, अतः आह—'कृतसन्धेः' इति। यदि सु + उत्थित + इञ्—इत्यत्र परत्वात् प्रागेव आदिवृद्धिः स्यात्, पश्चाच्च सन्धिकार्य्यं भवेत्, तदा 'सावुत्थितिः' इति अनिष्टं पदं लभ्यते ; न च 'अन्तरङ्गत्वात् सन्धिकार्य्यस्य बलवत्त्वं' वाच्यम्, तदा तत्रापि बलीयस्या अकृतव्यूह-परिभाषया सन्धेः प्रागेव प्रत्ययो भवितुमर्हति, अनिष्टं 'सावुत्थितिः' लभ्यते, अतः "अकृतव्यूहपरिभाषया सावुत्थितिर्माभूत्", इत्येदर्थमपि वृत्तौ "कृतसन्धेः" इति विशिष्य उक्तम्। अतश्च "समार्थानां प्रथमाद्वा" इति सूत्रे दीक्षितचरणैः "सामर्थ्यं··· कृतसन्धिकार्य्यत्वमिति यावत्" इति कथितम्॥ सामर्थ्ये सति प्रत्ययो भवति—इति हि समर्थपरिभाषाया आदेशः, ततः "वस्त्रमुपगोः अपत्यं चैत्रस्य" इत्यत्र 'उपगोः' शब्दस्य 'अपत्य' शब्दस्य च परस्परसामर्थ्याभावात् तद्धितप्रत्ययो न स्यात्। उक्तसूत्रे 'प्रथमात्' कथमुक्तम्—तदाह—"षष्ठ्यन्त्यादेव न तु प्रथमान्तात् प्रत्ययो भवति"। अतः 'अपत्यवाचकात्' प्रथमान्तात् 'षष्ठ्यर्थे' परे सत्यपि प्रत्ययो 'माभूत्' (यथा—उपगुरपत्यम् अस्य देवदत्तस्य) किन्तु प्रथमात् षष्ठ्यन्तात् समर्थादेव प्रत्ययःस्यात्॥ सूत्रे "वा"—ग्रहणात् (उपगोः अपत्यम् इति) वाक्यमपि स्यात्। "दैवयज्ञि" इति सूत्रात् अत्र सूत्रे "अन्यतरस्याम्" ग्रहणानुवृत्तेः "उपगोः अपत्यम्' इत्यत्र समासेन 'उपग्वपत्यम्' इत्यपि भवेत् इति सर्वं प्राक् "समर्थानां प्रथमाद्वा" इति सूत्रे उक्तम्॥ उपगु + अण् = औपगव—अस्य च जातित्वात् "जातेरस्त्री—" इति ङीष् भवेत् ततः 'औपगवी' च लभ्यते। अश्वपति + अण् ( अपत्यार्थे ) = आश्वपातः, दिति + ण्य ( अपत्यार्थे ) =

दैत्याः। उत्स+अञ् ( अपत्ये )=औत्सः, स्त्री+नञ् अपत्ये=स्त्रैणः, पुंस्+स्नञ् अपत्ये=पौंस्नः इत्यादि ; पूर्वे सूत्रादिकमुक्तम् ॥ अधुना "तस्यापत्यम्" इति सूत्रप्राप्तं अपत्यशब्दं क्रमप्राप्तं गोत्रशब्दं च व्याख्याति सूत्रकारः—

## १०८९। अपत्यं पौत्रप्रभृति गोत्रम् ।४।१।१६२॥

## टी—। अपत्यत्वेन विवक्षितं पौत्रादि गोत्रसंज्ञं स्यात्।

"Let what is spoken of as posterity (? progeny) beginning with grandson, be called gotra" ( Ballantyne ). Thus गोत्र here will include grandson etc. Thus in अपत्याधिकार this is the technical sense of the word गोत्र—whereas outside अपत्याधिकार गोत्र means प्रवराध्यायकथितगोत्र।

( Also see under "एको गोत्रे"—infra )।

मित—। अत्राधिकारे कोऽपि इव अपत्यशब्दस्य न केवलं पुत्रवाचकत्वं स्यात्, किन्तु पुत्रपौत्रादिसन्ततिवाचकत्वमेवास्तु, "पङ्क्ति विंशति—" सूत्रे भाष्ये तथा उक्तत्वात्। एवं च गोत्रशब्दस्य सन्ततिवाचकत्वे सति अपत्यस्यापि गोत्रत्वं प्राप्तं, अत्र व्याकरणे पुत्रस्य गोत्रत्वं मास्तु इत्यतः आह—"अपत्यत्वेन विवक्षितं पौत्रादि एव गोत्रसंज्ञं स्यात्"। यस्य यः पौत्रादिः तस्य तद् गोत्रमिति निष्कर्षः॥ पौत्रप्रभृति किम्? अनन्तरस्य अपत्यसंज्ञा माभूत्।

इदमेव अपत्याधिकारे गोत्रशब्दव्याख्यानम्, अन्यत्र गोत्रशब्देन प्रवराध्यायगोत्रमेव गृह्यते इति उत्तरत्रापि स्फुटीभविष्यति॥

## १०९०। जीवति तु वंश्ये युवा ।४।१।१६३॥

## टी—। वंश्ये पित्रादौ जीवति पौत्रादेर्यदपत्यं चतुर्थादि तद्युवसंज्ञमेव न तु गोत्रसंज्ञम्।

Let the fourth descendant in order i.e. the son of a grandson etc, when the original progenitor is living be called

युवन् and not a gotra. Thus the two designations "Gotra" and "Yuvan" are kept distinct here.

मित—। वंशे भव इति वंश्यः ( दिगादियत् ), वंशोत्पादकइत्यर्थः। एवं वंश्ये उत्पादके पित्रादौ जीवति सति 'पौत्रादेः यदपत्यं सन्ततिः चतुर्थादि' मूलपित्रादेः चतुर्थः सगोत्रः इत्यर्थः 'तद् युवसंज्ञं' स्यात्; न तु पूर्वमत्रप्राप्तं गोत्रसंज्ञं भवेत्। एवं सति अत्रविषये गोत्रसंज्ञाया समावेशो मासूत्।

१०९१। भ्रातरि च ज्यायसि ।४।१।१६४॥

दी—। ज्येष्ठे भ्रातरि जीवति कनीयान् चतुर्थादिः युवसंज्ञश्च स्यात्।

Though original progenitor dies, still the fourth descendent as said in sutra 1090 is called a "yuvan" if the eldest brother is alive.

मित—। "मृतेष्वपि पित्रादिषु ज्येष्ठभ्रातरि जवति ( सति ) युवसंज्ञार्थमिदं सूत्रम्" इति बालमनोरमा॥ गर्गस्य गोत्रापत्यम्—गार्ग्यः। गार्ग्यस्य द्वौ पुत्रौ, कनीयान् पित्रादौवंश्ये मृते भ्रातरि ज्यायसि च जीवति युवसंज्ञो भवति।

१०९२। वान्यस्मिन् सपिण्डे स्थविरतरे जीवति ।४।१।१६५

दी—। भ्रातुरन्यस्मिन् सपिण्डे स्थविरतरे जीवति पौत्रप्रभृतेः अपत्यं जीवदेव युवसंज्ञं वा स्यात्। एकं जीवतिग्रहणमपत्यस्य विशेषणम्। द्वितीयं सपिण्डस्य। तरव्-निर्देशः उभयोरुत्कर्षार्थः। स्थानेन वयसा चोत्कृष्टे पितृव्ये मातामहे(?) भ्रातरि वा जीवति। गार्ग्यस्यापत्यं गार्ग्यायणः—गार्ग्यो वा।

The living son of grandsons etc. is optionally ("वा") called a yuvan if original progenitor's venerable kindred other than the brother ( as said in 1091 sutra ) still survives. In

the vritti, of the two जीवत्, one "जीवति" is a predicative adj. of अपत्य, the second जीवत् refers to a सपिण्ड *। The तरप् in स्थविरतर is to denote honour in both place and age. Thus 'if a venerable पितृव्य ( uncle ), grand-father or his brother (?) survives, then the fourth descendant downwards ( पौत्रप्रभृतेः अपत्यम् ) is optionally a युवसंज्ञ। Thus we get in such cases both गार्ग्यायण ( when a युवसंज्ञा ), and गार्ग्य ( when not a युवसंज्ञा )।

मित—। सपिण्डास्तु—स्वयम्, पिता, पितामह, प्रपितामहादि सप्तपुरुषाः। एवमत्र मातृकुलेऽपि गणना, व्याख्यानात् (?)। 'भ्रातुः' ज्यं प्रकृतितः 'अन्यस्मिन् स्थविरतरे' अतिवृद्धे सपिण्डे जीवति सति पौत्रप्रभृतेः अपत्यं 'जीवत्' एव 'युवसंज्ञं' तदाख्यां 'वा' विकल्पेन लभते—इति सूत्रार्थः। वृत्तौ तु 'एकं जीवतिग्रहणं' अपत्यस्य विशेषणं यथा "अपत्यं जीवत् (सत्)", द्वितीयं जीवतिग्रहणं 'सपिण्डस्य विशेषणम्', यथा "सपिण्डे जीवति सति"। तदाह—"स्थानेन वयसा उत्कृष्टे पितृव्ये मातामहे भ्रातरि * वा जीवति" इत्यादि। [ 'पितामहे भ्रातरि' इत्यत्र ज्यायान् पाठः, वृत्तौ यथा ]। स्थानतः उत्कृष्ट पितृव्य एव, तस्य पितृस्थानीयत्वात्। वयसा चोत्कृष्ट मातामह एव। अन्यत् स्पष्टम्। गार्ग्यायणः इति युवसंज्ञापत्ते, तदभावे गोत्रसंज्ञायाम् गार्ग्यः एव।

**टी—। 'स्थविर'—इति किम्? स्थानवयोन्यूने गार्ग्य एव। 'जीवति' इति किम्? मृते मृतो वा गार्ग्य एव॥ "वृद्धस्य च पूजायाम् इति वाच्यम्" (वा); गोत्रस्यैव वृद्धसंज्ञा प्राचाम्। गोत्रस्य युवसंज्ञा पूजायां गम्यमानायाम्। तत्रभवान् गार्ग्यायणः। 'पूजा' इति किम्? गार्ग्यः। "यूनश्च कुत्सायाम् गोत्रसंज्ञेति**

---

* The सपिण्ड are self, father, grand-father, great-grand-father &c. up to the 7th genarations in father's side. Cp. "सप्तपुरुषावधिज्ञातयः सपिण्डाः"। So prefer the reading पितामहे भ्रातरि here.

**वाच्यम् ( वा- )—गार्ग्यो जाल्मः। 'कुत्सा'—इति किम्? गार्ग्यायणः।**

Why do we say स्थविरतरे in the sutra and vritti? If the living सपिण्ड is inferior by place and age then no युवसंज्ञा arises and we get गार्ग्य ( with गोत्रसंज्ञा )। Why do we say 'जीवति' here? If the upward सपिन्ड is dead or if the fourth अपत्य is dead then by गोत्रसंज्ञा we get गार्ग्यः only, and not गार्ग्यायणः by युवसंज्ञा। Again if a Gotra is honoured, then it gets युवसंज्ञा thus we have तत्रभवान् गार्ग्यायणः[here तत्रभवान् इति सुप् सुपा—(कर्मधा ?) implies पूजा]; in the varttika here "वृद्धस्य" acc. to old professors means "गोत्रस्य"। Why do we here say पूजायाम्—witness गार्ग्य as without युवसंज्ञा for no पूजा is implied here. Again in case of censure ( कुत्सा ) the युवसंज्ञा is termed as गोत्रसंज्ञा। Then गार्ग्यः जाल्मः ( the wicked descendant of गर्ग ), here जाल्म implies "censure." why do we say 'कुत्सा' here? witness गार्ग्यायणः with—युवप्रत्यय, when no कुत्सा is denoted.

मित—। सूत्रे कथं 'स्थविरतरे' उक्तम् इति आह? सपिण्डे स्थानतः वयसा वा न्यूने सति युवसंज्ञा यथा न स्यात्। 'जीवति' ग्रहणात्, सपिण्डे मृते युवसंज्ञा न स्यात्, अत आह—"मृते मृतो वा गार्ग्य एव"॥ अत्र वार्त्तिकस्थं वृद्धशब्दं व्याख्याति—'वृद्धस्य' इति गोत्रस्यार्थे प्रयुक्तः, अतः अर्थो यथा—गोत्रस्य पूजायाम् युवसंज्ञा स्यात्। एवम् उदाहरणे 'तत्रभवान्' इति पूजावाची शब्दः—"तत्रभवान् गार्ग्यायणः" = पूज्यः गार्ग्यायणः। पूजायाम् अगम्यमानायाम् युवसंज्ञा न स्यात्, यथा गार्ग्य इति॥ 'यूनश्च'—इत्यादि वार्त्तिके "गार्ग्यः जाल्मः" इति उदाहरणे—तथा च बालमनोरमायाम्—"यो वृद्धाननादृत्य स्वातन्त्र्यं भजते तद्विषयमिदम्"—कुत्सा-द्योतनाय जाल्मशब्दः व्यवहृतः। असत्यां निन्दायाम् युवसंज्ञायां—गार्ग्यायणः इति॥

१०९३। एको गोत्रे ।४।१।९३॥

टी—। गोत्रे एक एवापत्यप्रत्ययः स्यात्। उपगोर्गोत्रापत्यम् औपगवः। गार्ग्यः। नाड़ायनः।

"गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा।
यद्वा स्वद्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते॥ १॥
अपत्यं पितुरेव स्यात्ततः प्राचामपीति च।
मतभेदेन तद्वान्ध्यै सूत्रमेतत्तथोत्तरम्॥" २॥

पितुरेवापत्यमिति पक्षे ह्युपगोस्तृतीये वाच्ये औपगवादिञ् स्यात्। चतुर्थे त्वजीवज्ज्येष्ठे मृतवंश्ये औपगवेः फक्। इत्थं फञिञोः परम्परायां मूलाच्छततमे गोत्रे एकोनशतं प्रत्ययाः स्युः। पितामहादीनामपीति मुख्यपक्षे तु तृतीये वाच्ये उपगोरणा इष्टे सिद्धे अपि अणन्तादिञ् अपि स्यात्। ततश्चतुर्थे फगिति फगिञोः परम्परायां शततमे गोत्रे अष्टनवतिः अनिष्टप्रत्ययाः स्युः। अतो नियमार्थमिदं सूत्रम्। एवमुत्तरसूत्रे अपूर्ण्ह्यम्।

Only one अपत्यप्रत्यय is to be attached to a word in the sense of गोत्र (i.e. गोत्रापत्य)। Thus उपगोः अपत्यम् (सन्तति) will give औपगवः (with अण्); further इञ् after औपगव in the sense of his गोत्रापत्य again, will not be attached; for this purpose in view this sutra is made, similarly गर्गस्य गोत्रापत्यं will give गार्ग्य only (with one अपत्यप्रत्यय); thus we get नाड़ायन also with नड़ादि फक् in the sense of गोत्रापत्य। There are two views that अपत्य means (i) son only; also (ii) progeny in general (i.e. son and grandson) some grammarians take अपत्य in the sense of "son" (पुत्र) only,

whereas Panini takes अपत्य here in the sense of progeny in general ( सन्ततिवाचक ) i. e. he includes पौत्र also ; this is said in the sutra "अपत्यं पौत्रप्रभृति गोत्रम् ।" Thus acc. to Panini, the third descendent ( पौत्र) is "gotra" ( गोत्रापत्य ) whereas in some senses the fourth one ( प्रपौत्र ) is युवा—[ and son is अनन्तरापत्य ] ; and diff. affixes are enjoined in these diff. technical senses. Now in order that affix after affix ( i.e. one तद्धितप्रत्यय after another in the same ( अपत्य ) sense after one original word ) may not be attached in the sense of गोत्रापत्य, the present sutra is made as "एको गोत्रे" । Thus we have in the sloka "तद् ह्यन्यं सूत्रमेतत् तथोत्तरम्"। Thus again in the view that अपत्य is of father only ( "अपत्यम् पितुरेव स्यात्" ), if this present rule is not made, then after one original word as उपगु &c, affix after affix i.e. अपत्यप्रत्यय after अपत्यप्रत्यय, in the sense of तस्य अपत्यम् will go on, one after another in succession till in the case of 100th generation 99 अपत्यप्रत्यय will be attached (e. g.)—उपगोरपत्यम् = उपगु + अण् = औपगव ; then औपगवस्य अपत्यम will yield औपगवि with इञ्, then again औपगवे: अपत्यम् will give औपगवायन with फक् by "यञिञोश्च" & so on, but as this rule restricts only one अपत्य-प्रत्यय in the sense of गोत्रापत्य, so in a series of 100 affixes, 99 affixes will be illegible (अनिष्ट), ( comp "गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा प्रसज्यते") । Lastly in the view that अपत्य is of grandfather also ( ततः प्राचामपीति ) i,e. अपत्य = पौत्र ; then in the case of 100 अपत्यप्रत्यय after उपगु etc, as shown above first two अपत्य प्रत्यय one denoting son, another grandson will be correct ; in other words here (then) 98 affixes will be illegal ; thus in this case

in a serial order of अपत्यप्रत्यय, illegebility will be in all अपत्यप्रत्यय lessened by 2 from the original root-प्रत्यय ( thus in 1oo अपत्य प्रत्यय, 1oo—2=98 will be अनिष्ट प्रत्ययमाला )—(comp"स्वयूनसंख्येभ्य: अनिष्टोत्पत्ति: प्रसज्यते" )। Bhattoji later explains the gist of these two slokas "गोत्रे स्वैकोन—सूत्रमेतत्तयोत्तरम्", by पितुरेव अपत्यमिति पक्षे &c. explaining the view that son (अपत्य) is of father only. In this case the third generation from उपगु will be औपगवि ( with इञ after औपगव, the 2nd generation),then in the fourth generation ( descendant ) [ where ज्येष्ठ is not living ] [ or—where original वंशप्रवर्त्तक is dead] युवसंज्ञा being barred (see rules "जीवति तु वंश्ये युवा" and "भ्रातरि च ज्यायसि") we get गोत्रसंज्ञा, and then गोत्रार्थक फक् will give औपगवायन। Thus फक् and इञ going on serially, in 1oo the गोत्र from the original, 1oo affixes will be attached ( of these 99 will be illegal "स्वस्मात् एकोनसंख्यानां अनिष्टप्रत्ययानां परम्परा उक्तरीत्या प्रसज्यते") ; In the original view (मुख्यपक्ष) that अपत्य is of grand-father also then the third generation of उपगु being meant, अण् will first give औपगव—even then इञ after this अदन्त word will come yielding औपगवि; then after this औपगवि there is फक् in the fourth generation. Thus फक् and इञ following on in cyclic order in the 1oo gotra pratyayas 98 undesirable affixes will come in. To check this fault this present sutra is made. This is also to be understood in the following rule.

मित—। अपत्याधिकारात् "एको गोत्रे" इत्यत्र, 'एक' इत्यनेन 'एक अपत्यप्रत्यय:' इति गम्यते। 'एक' इति विशिष्य कथनात्, अधिक: प्रत्यय: न भवति, अत आह— "गोत्रे एक एव अपत्यप्रत्यय: स्यात्"। उदाहरणं यथा—उपगो: अपत्यम् इति उपगु+अण् औपगव:। अस्मात्—औपगवस्य अपत्यम् इति औपगव+इञ=

औपगवि ( "अत इञ्" इति इञ् )—इति द्वितीयः अपत्यप्रत्ययो यथा न स्यात्, अत विशिष्य आह—'एक एव अपत्यप्रत्ययः स्यात्'' । अपत्यशब्दस्तु पुत्रे एव रूढ़ः इति केषाञ्चित् मतम् = इति प्रथमपक्षे तु उक्तं सङ्गच्छते । किन्तु अपत्यशब्दः सन्तानवाची सन् पौत्रेऽपि रूढ़ इति पौत्रस्याप्यपत्यत्वं न विवक्षितं, अपत्यत्वादस्य गोत्रत्वं सति इति द्वितीयपक्षे तु "औपगवि" इति प्रयोगः साधुः, किन्तु पुनः औपगवेः अपत्यम् इत्यत्र चतुर्थे वंश्ये वाच्ये औपगव + फक् ( "यञिञोश्च" इतिफक् ) = औपगवायनः इति तु असाधुरेव । यतः चतुर्थादि अपत्यं न गोत्रं किन्तु युवसंज्ञमेव । गोत्रविषये एव एक अपत्यप्रत्ययः यथा स्यात् इत्येवमर्थं सूत्रं विहितम् स्यात् । एवं प्रथमपक्षे ( अपत्यशब्दस्य पुत्रत्वपक्षे )—अपत्यार्थे प्रत्ययपरम्परायां विहितायाम्, (उपगोरपत्यम् औपगवः, औपगवस्यापत्यं औपगविः, तस्यापत्यं औपगवायनः इति परम्परायां विहितायाम् ) एक एव साधुः, अन्ये प्रत्ययाः अनिष्टा एव । एवं क्रमेण शततमे अपत्यप्रत्यये सति,—एकोनशतं अनिष्टाः प्रसज्यन्ते । यत्संख्यकाः अपत्यप्रत्ययाः विहिता ततः एकोनसंख्यानां प्रत्ययानाम् अनिष्टत्वं गम्यते एव । द्वितीयपक्षे ( अपत्यशब्दस्य सन्तानसाधारण्येन पौत्रत्वेऽपि योग्यत्वे ) तु, अपत्यार्थे द्वौ प्रत्ययौ भवतः—यथा उपगोरपत्यं औपगवः, तस्य पुनः अपत्यं औपगव + इञ = औपगविः इति । अस्मात् औपगविशब्दात् पुनः अपत्यप्रत्यये सति ( औपगवि + फक् इत्यत्र ) एकमनिष्टं स्यात् । एवं त्रितये अपत्यप्रत्यये सति—एकमनिष्टं प्रसज्यते । ततश्च अनेनक्रमेण शततमे अपत्यप्रत्यये सति अष्टनवतिरनिष्टप्रत्ययाः स्युः । अतीव यत्संख्यका प्रत्ययाः ततः द्वि-न्यूनसंख्यकाः एव अनिष्टप्रत्ययाः प्रसज्यन्ते । द्वितीयपक्षस्तु मुख्यपक्षः पाणिनिसम्मतः,—एषोऽर्थः "अपत्यं पौत्रप्रभृति गोत्रम्" इति सूत्रस्य टीकातः । सर्वमेतत् अभिप्रेत्याह श्लोकद्वयेन गोत्रेति—तद्व्याख्या—"गोत्रे (प्रथमपक्षे इत्यर्थः) स्वैकोनसंख्यानां प्रत्ययानां परम्परा (अनिष्टपरम्परा इत्यर्थः) प्रसज्यते, यद्वा (द्वितीयपक्षे इत्यर्थः), स्व-द्व्यूनसंख्यकेभ्यः (प्रत्ययेभ्यः) अनिष्टोत्पत्तिः प्रसज्यते । "अपत्यं पितुरेव स्यात्", "ततः प्राचाम् अपि" (पितामहादीनामपि पौत्रः अपत्यं स्यात् इत्यर्थः)"—इति मतभेदेन हेतुना (गोत्रं उक्ता द्विप्रकारम् अनिष्टप्रत्ययपरम्परा प्रसज्यते ) । तद् हानेय (तदनिष्टप्रत्ययपरम्परा-

त्यागाय) एतत् सूत्रम् ("एको गोत्रे" इति सूत्रं कृतम्) तथा उत्तरसूत्रम् (यथा, "गोत्राद्-यून्यस्त्रियाम्" इति उत्तरसूत्रम् कृतम्)। अधुना भट्टोजिरेव श्लोकवार्त्तिकं व्याख्यास्यन् प्रथमपक्षमाह—"पितैरेव अपत्यम्" इति पक्षे (प्रथमपक्षे इत्यर्थः) उपगोस्तृतीये वाच्ये औपगवादिञ् स्यात्"—(यथा—उपग + अण् = औपगवः, औपगवस्य इति औपगव + इञ् = औपगवि i. e. उपगोः तृतीयः वंशधरः)। जीवन् ज्येष्ठः यस्य इति जीवज्ज्येष्ठः, ज्येष्ठे जीवति चतुर्थस्य युवसंज्ञा, अत आह—'अजीवज्ज्येष्ठे'—(तथा च सूत्रं "भ्रातरि च ज्यायसि"); मृतः वंश्यो यस्य इति मृतवंश्यः, "वंश्ये-पित्रादौ जीवति युवसंज्ञा स्यात्" इति युवसंज्ञां वारयन्नाह 'मृतवंश्ये' इति। एवं पक्षे उपगोः चतुर्थे वाच्ये औपगवेः फक् स्यात ("यञिञोश्च" इति सूत्रेण फक् स्यात्) ततः औपगवायन इति भवति। "इत्थं फगिञोः प्रत्ययपरम्परायां सत्यां मूलात् शततमे गोत्रे एकोनशत-प्रत्ययाः स्युः—"शततमे गोत्रप्रत्यये सति एकोनशतं प्रत्ययाः अनिष्टाः स्युः इत्यर्थः। अतः श्लोके इममेव प्रथमपक्षमुद्दिश्य आह—"गोत्रे स्वैकोनसंख्यानां प्रत्ययानाम् अनिष्टपरम्परा प्रसज्यते" इति। भट्टोजिरधुना द्वितीयपक्षमाह—"पितामहादीनामपि (पौत्रं अपत्यं स्यात्)—इति मुख्यपक्षे (पाणिनीयपक्षे) तु तृतीये वाच्ये (उपगोः तृतीयवंशधरे पौत्रे वाच्ये) उपगोः अणा इष्टसिद्धे अपि (अण् प्रत्ययेन-औपगव-शब्देन पुत्रत्वे सिद्धे अपि), अस्मात् (औपगवशब्दात्) इञ् अपि स्यात् (पौत्रस्यापि अपत्यत्वेन विवक्षितत्वात् गोत्रत्वात् तद्द्योतनाय औपगवशब्दात् "अतइञ्" इति इञपि इष्टः स्यात्)। ततः चतुर्थे (वंशधरे वाच्ये) फक् ("यञिञोश्च" इतिसूत्रेण फक्) स्यात्, इति (क्रमेण) फगिञोः (अकारान्तात् इञ्, पुनः इञन्तात् फक् इति) परम्परायां शततमगोत्रे (गोत्रप्रत्यये इत्यर्थः) अष्टनवतेः (प्रकृतिभ्यः, शब्देभ्यः इत्यर्थः) अनिष्टप्रत्ययाः स्युः"। एवं यथा न स्यात् अतः नियमार्थम् इदं सूत्रम् ("एकोगोत्रे" इति सूत्रं विहितम्)। एवम् एषोर्थः "उत्तरसूत्रेपि,"—"गोत्राद्यून्यस्त्रियाम्" इति उत्तर-सूत्रेपि ऊह्यम्—एषोर्थः तत्रापि ज्ञेयः बोध्यो वा इत्यर्थः।

## १०८४। गोत्राद्यून्यस्त्रियाम्। ४।१।९४॥

**दी—। यून्यपत्ये गोत्रप्रत्ययान्तादेव अपत्यप्रत्ययः स्यात्, स्त्रियां तु न यूवसंज्ञा। गर्गस्य यूवापत्यं गार्ग्यायणः। स्त्रियां गोत्रत्वादेक एव प्रत्ययः।**

When युवापत्य is implied then अपत्यप्रत्यय arises after a word ending in गोत्रप्रत्यय; but this युवसंज्ञा does not attach in the feminine gender. Thus in masculine only युवसंज्ञा is attached. For example गर्गस्ययुवापत्यम् = गार्ग्यायणः (with फक्), First गर्गस्य गोत्रापत्यं gives गर्ग + यञ् = गार्ग्य (by "गर्गादिभ्यो यञ्") then गार्ग्यस्य युवापत्यं (चतुर्थादि) = गार्ग्य + फक् = गार्ग्यायणः (by "यञिञोश्च")। As युवसंज्ञा does not arise in the fem. so in fem., only one गोत्रप्रत्यय comes in i.e., females cannot come within the denotation of युवसंज्ञा। The clause "स्त्रियां तुन युवसंज्ञा, स्त्रियां गोत्रत्वात् एक एव प्रत्ययः" is got from योगविभाग of the word "अस्त्रियाम्" in the sutra.

[N. B.—Each Sutra of Panini is called a योग। Words in a योग or sutra are called एकयोगस्थ। The separation however of a word or a portion from a sutra is called योगविभाग ]।

मित—। युवापत्ये विवक्षिते, गोत्रप्रत्ययान्तात् एव अपत्यप्रत्ययः भवति। "अस्त्रियाम्" इति पदस्य योगविभागात् "स्त्रियां तु न युवसंज्ञा" इति लभ्यते। अतः स्त्री उक्तयुवसंज्ञा न स्यात् इति फलितत्वात् आह—"स्त्रियां गोत्रत्वात् एक एव प्रत्ययः" इति। उदाहरणं यथा—गर्गस्य युवापत्यम् इत्यर्थे—प्रथमं गर्गस्य गोत्रापत्यार्थे गर्ग + यञ = गार्ग्य ("गर्गादिभ्यो यञ्") इति गोत्रप्रत्ययान्तशब्दे प्राप्ते, अस्मात् एव 'गार्ग्य'—शब्दात् युवापत्ये "यञिञोश्च" इति फकि गार्ग्यायणः इति लभ्यते। स्त्रियां गोत्रत्वात् एकएव गोत्रप्रत्यये, ततःङीपि गार्गी इत्येव भवेत्। अत्रापि स्त्रीभिन्ने यूनि एक एव प्रत्ययः स्यात् इति पूर्वसूत्रे उक्तम्॥

१०८५। अत इञ्। ४।१।८५॥

दी—। अदन्तं यत् प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तात् इञ् स्यात् अपत्ये अर्थे। दाक्षिः।

The original अदन्त base (base ending in अकार) after which the षष्ठी विभक्ति has been added (in course of अपत्याधिकार) takes the affix इञ् in the sense of अपत्य (descendant सन्तति)। Thus दक्षस्य अपत्यं gives दक्ष+इञ्=दाक्षिः। Similarly दाशरथि is got. [The use दाशरथ in "प्रदीयतां दाशरथाय मैथिली" etc is आर्ष, or is defended with अण् in the general sense "तस्येदम्"। Thus Bhattoji in his Manorama says "कथं तर्हि 'प्रदीयतां दाशरथाय मैथिली' इति? अपत्यरूपविशेषस्याविवक्षायां शैषिकोऽण्"]।

मित—। 'अत' इति तदन्तविधिर्बोध्यः। तत आह—अदन्तात् प्रातिपदिकात् इत्यर्थः। "तस्यापत्यम्", "समर्थानां प्रथमाद्वा" इत्यनुवृत्तौ आह—"अदन्तं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यन्तात् इञ्स्यात्"। प्रथमोच्चारित-तच्छब्दबोधितात् षष्ठ्यन्तात् प्रातिपदिकात् इञ् न निष्कर्षः। अन्यत्सुगमम्॥

१०८६। बाह्वादिभ्यश्च। ४।१।८६॥

दी—। बाहविः। औडुलोमिः। आकृतिगणोऽयम्॥

Words of the बाहु class (बाहु here refers to "the name of a sage") take इञ् in the sense of अपत्य (descendant). Thus बाहु+इञ=बाहवि (son etc of the sage बाहु)।

मित—। सुगमा। बाहु+इञ (ततः "ओर्गुणः" इति गुणेसति)=बाहविः (बाहुनामक ऋषेरपत्यमित्यर्थः)। उडुलोमन्+इञ्=("नस्तद्धिते" इति टिलोपे सति) औडुलोम्+इञ्=औडुलोमिः॥ बाह्वादिगणो यथा—बाहु, उपबाहु, उपवाकु, निवाकु, वटाकु, उपबिन्दु, वृषली, वृकला, चूड़ा, बलाका, मूषिका, कुशला, कगला, ध्रुवका, सुमित्रा, दुर्मित्रा, पुष्करसद्, अनुहरत्,

द्विवशर्मन्, अग्निशर्मन्, भद्रशर्मन्, सुशर्मन्, कुनामन्, सुनामन्, पञ्चन्, सप्तन्, अष्टन्, अमितौजसः सलोपश्च, सुधावन्, उदञ्च, मातृ, शिरस्, शराविन्, मरीचिन्, क्षेमवृद्धिन्, शृङ्खलतोदिन्, खरनादिन्, नगमर्दिन्, प्राकारमर्दिन्, लोमन्, अजीगर्त्त, कृष्ण, युधिष्ठिर, अर्जुन, साम्ब, गद, प्रद्युम्न, राम, उदङ्क, उदकस्य संज्ञायाम्, सम्भूयोम्भसोः सलोपश्च।— आकृतिगणोयम्। तेन—सातकि, जाङ्घि, शौरि, ऐन्द्रशर्मि, आजधेनवि, सावर्णि इत्यादि—सिद्धम्॥

१०९७। सुधातुरकङ् च। ८।४।१।१९॥

दी—। चादिञ्। सुधातुरपत्यं सौधातकिः॥ व्यास-वरुड़-निषाद-चण्डालविम्बानां चेति वक्तव्यम् ( वा )—॥

The word सुधातृ takes इञ् in the sense of तस्यापत्य (his descendant) and then अकङ् is added to the base. Thus सुधातृ + इञ् = सुधात् अक ( ङित्वाद् अन्त्यादेशः ) + इञ् = सौधातकि। The words व्यास, वरुड़, निषाद, चण्डाल, विम्ब take इञ् in the sense of अपत्य and then अकङ् is added to these words. Thus there being व्यास ( अक् ) + इञ्, we look forward—

मित—। सुधातृ शब्दात् अपत्यार्थे इञ्-प्रत्ययः स्यात्, प्रकृतेः अकङादेशश्च इति सूत्रार्थः। ततः सुधातृ + इञ् इतिस्थिते प्रकृतेः सुधातृ-शब्दस्य अकङादेशः। ङित्वात् अन्त्यादेशेसति सुधातृ अकङ + इञ् इति जाते आदिवृद्धौ—सौधातकिः। व्यास—वरुड़—निषाद—चण्डाल—विम्ब-शब्दात् अपत्यार्थे इञप्रत्ययः प्रकृतेः अकङ् आदेशश्च। ततः व्यास ( अकङ ) + इञ् इति स्थिते आह—

१०९८। न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्। ७।३।३॥

दी—। पदान्ताभ्यां यकार-वकाराभ्यां परस्य न वृद्धिः, किंतु ताभ्यां पूर्वौ क्रमात् ऐचौ आगमौ स्तः। वैयासकिः। वारुड़किः इत्यादि।

The usual वृद्धि does not come in case of a vowel that follows पदान्त यकार or व-कार, but the augments ऐच् and औच् are respectively attached before those य् and व्। Thus we get वैयासकि (with इञ् and अकङ्-आदेश after व्यास)। Similarly वाकुड़कि etc.

मित—। य्च व्च यवौ (द्वन्द्वः)। ताभ्याम् (५मी द्विवचन); अत आह—"यकारवकाराभ्याम् परस्य"। 'पदान्ताभ्याम्' इति विशेषणम्। "मृजेर्वृद्धिः" इतोऽतः अनुवृत्तिलभ्यं वृद्धिशब्दम् आकृष्य शेषपूरणेन आह—"न वृद्धिः"। "ऐच्" इति प्रत्याहारः। यथाक्रमं यकारात् पूर्वं ऐच्, वकारात् पूर्वं औच्। अत आह—ताभ्यां पूर्वौ क्रमात् ऐचौ आगमौ स्तः। व्यासशब्देन अत्र वेदव्यासः (पुराण-भारतादिप्रणेता एव लभ्यते (नामैकदेशग्रहणम्)। व्यास+अकङ्+इञ् इति स्थिते व्यासक्+इञ् इत्यत्र वृद्धिं बाधित्वा पदान्त—य-कारस्थाने 'ऐ' आगमे सति वैयासक+इञ्=वैयासकिः (सिद्धः)। एवं वरुड़शब्दात् अपत्ये 'वारुड़किः', निषादात्—नैषादकिः, चन्डालात्—चान्डालकि, विश्वात्—वैश्वकिः।

१०९९। गोत्रे कुञ्जादिभ्यः च्फञ् ४।१।९८॥

११००। व्रात-च्फञोरस्त्रियाम् ।५।३।११३॥

**टी—। व्रातवाचिभ्यः च्फञन्तेभ्यश्च स्वार्थे ञ्यः स्यात् न तु स्त्रियाम्। कौञ्जायन्यः। वहुत्वे तद्राजत्वात् लुग्वक्ष्यते। व्राध्नायन्यः। स्त्रियाम्—कौञ्जायनी; गोत्रत्वेन जातित्वात् ङीष्। अनन्तरापत्ये कौञ्जिः।**

Words of the कुञ्ज class take च्-फञ् in the sense of गोत्र (पौत्र प्रभृति) and not अपत्य in general. Then again the स्वार्थिक affix ञ्य comes after words denoting व्रात (a whole host—समूह) and words ending in the affix च्-फञ, but this स्वार्थिक affix does not come in the feminine. Thus कुञ्ज+च्-फञ (आयन)=कौञ्जयन+ञ्य

( स्वार्थिक )=कौञ्जायन्य। In the plural number this ञ्य elides because in the plural this is called तद्राज by the rule "ञ्याद्यस्तद्राजा" (५।३।११९) and then लुक् comes in by "तद्राजस्य बहुषु लुक्—"; thus ब्राध्नायन्य like कौञ्जायन्य। In the fem. however ञ्य not coming in, we get कौञ्जायनी—ङीष् comes because it is जातिवाचक being गोत्र प्रत्ययान्त शब्द (see the rule जातेरस्त्रीविषयात् अयोपधात्)। But in the sense of अनन्तरापत्य i.e. son only, the rule "गोत्रे कुञ्जादिभ्यः" does not apply ( for this rule directs फञ् in the sense of गोत्र ) and then इञ् by "अत इञ्" comes giving कौञ्जि।

मित—। ब्रातश्च चफञ् च इति द्वन्द्वः ततः पञ्चम्यर्थे षष्ठी, अतः वृत्तौ आह— "ब्रातवाचिभ्यः च्फञन्तेभ्यश्च' इति। कौञ्जायन्य इति स्वार्थे ञ्य सति सिद्धः इति स्पष्टम्। 'बहुत्वे' बहुवचने—"ञ्याद्यस्तद्राजा" इति सूत्रात्—'तद्राजत्वात् लुक् वक्ष्यते' ("तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति हिसूत्रम्)। ब्रध्न-शब्दस्य कुञ्जादिपाठात् "गोत्रे कुञ्जादिभ्यः च्फञ्"। ततः स्वार्थे ञ्यः; 'ञ'—इत्वात् तद्धिते आदिवृद्धिः। स्त्रियां स्वार्थिक-ञ्य प्रत्ययस्य निषेधात् 'कौञ्जायनी' इति। 'कौञ्जायन' इत्यत्र अदन्तत्वात् टाप् न स्यात्—यतः गोत्रे न जातित्वात् ("जातेरस्त्रीविषयात् अयोपधात्" इतिसूत्रं द्रष्टव्यम्) ङीष् भवति। अत्रसूत्रे गोत्रग्रहणात् ( गोत्रस्य च पौत्रादित्वे उक्तत्वात्), अनन्तरापत्ये (पुत्रार्थे इत्यर्थः) च्फञ् न स्यात्, किन्तु कुञ्जादि-शब्दस्य अदन्तत्वात् "अत इञ्" इति इञिसति 'कौञ्जिः' इत्यादि भवति॥

११०१। नडादिभ्यः फक् ४।१।९९॥

टी—। गोत्रे इत्येव। नाडायनः। चारायणः। अनन्तरो नाडिः।

Words of the नडादि class take the affix फक् in the sense of गोत्र ( i. e. in the sense of grandson &c. see rule 1100 also ). Thus we get नड+फक्=नड+आयन=नाडायनः ( कित्वात् तद्धिते आदि-

वृद्धि: ) &c. But this फक् does not come in the sense of an immediate descendant i. e. son, and then we get नड़ + इञ् (by "अत इञ्") = नाड़ि: ।

मित— । सुगमा ॥ फक्स्थाने 'आयन' स्यात्, अत: नड़ + आयन = नाडायन: (आदिवृद्धि:) । गोत्रस्य पाणिनिमते पौत्रादित्वात् अनन्तरापत्यस्य पुत्रत्वात् एव गोत्रत्वाभावात्, अत्र नड़ादिगणं गोत्रानुवर्त्तनात् अनन्तरापत्यस्य "अत इञ्" ( अपत्यार्थे ) इति इञेव स्यात्, तत: नड़ + इञ् इति नाड़ि: ॥ नड़ादिगणो यथा—नड़, चर, बक, मुञ्ज, इतिक, इतिश, उपक, एक, लमक, शलङ्कु शलङ्क (च) सप्तल, वाजप्य, तिक, अग्निशर्मन्, कृष्णरणौ, प्राण, नर, सायक, दास, मित्र, द्वीप, पिङ्गर, पिङ्गल, किङ्कर, किङ्कल, कात्यय, आतर, कातल, काश्य, काव्य, अज, अमुष्य, कृष्णरणौ, ब्राह्मणवासिष्ठे, अमित्र, लिगु, चित्र, कुमार, क्रोष्ट, क्रोष्ट च, लोह, दुर्ग, स्तम्भ, शिंशपा, अग्रतृण, शकट, सुमनस्, सुमत, मिमत, ऋच्, जलन्धर, अध्वर, युगन्धर, हंसक, दण्डिन्, पिण्ड, पञ्चाल, चमसिन्, सुकृता, स्थिरक, ब्राह्मण, चटक, बदर, अश्वल, खरप, लङ्क, इन्ध, अस्त्र, कामुक, ब्रह्मदत्त, उदुम्बर, शोण, अलोह, दण्ड । इति नड़ादि: ॥

**११०३ । हरितादिभ्योऽञ: ।४।१।१०० ॥**

**दी— । एभ्योऽञन्तेभ्यो यूनि फक् । हारितायन: । इह गोत्राधिकारेऽपि सामर्थ्याद् यून्ययम् । नहि गोत्रादपरो गोत्रप्रत्यय: । विदाद्यन्तर्गणोहरितादि: ।**

The affix फक् ( आयन ) comes in the sense of युवप्रत्यय after words of the हरित class that has already taken the affix अञ् in the sense of गोत्रापत्य (पौत्र) । Thus हरित + अञ् ( विदादि — अञ् ) = हारित: । तस्य युवापत्यम् = हारित + फक् = हारित + आयन = हारितायन: । The affix फक् here though enumerated and enjoined within the jurisdiction of गोत्रप्रत्यय, still it is to be understood in the sense of युवप्रत्यय, for हरितादि words are already mentioned in

the विदादि class and that class takes अञ् in the sense of गोत्र ; so if a further अपत्यप्रत्यय is to be made after हरितादि words ending in गोत्रप्रत्यय अञ्, then that affix ( प्रत्यय ) is to be taken in the sense of युवापत्य, and because the rule "एको गोत्रे" declares that a further गोत्रप्रत्यय is not to come after a गोत्रप्रत्ययान्त word, so Bhattoji says "इह गोत्राधिकारे अपि सामर्थ्याद्यूनि अयम्। न हि गोत्रादपरो गोत्रप्रत्ययः &c".

मित—। गोत्रार्थे अञन्तेभ्यः हरितादिभ्यः फक् स्यात्। कथं गोत्रार्थे अञन्तेभ्यः इति विज्ञायते ? हरितादयः विदाद्यन्तर्गणः, स च गणः गोत्रार्थे एव अञप्रत्ययं लभते, "अनृष्यानन्तर्ये विदादिभ्योऽञ्" इति हि सूत्रम्। अतः अत्र इदमेव नाम्यं व्याख्यानम्। ततश्च ज्ञायते फक् यूनि एव स्यात्। अतः आह "इह गोत्राधिकारेऽपि सामर्थ्याद्यूनि फक्" इत्यादि। "एको गोत्रे," इति सूत्रात् च ज्ञायते यत् गोत्रप्रत्ययान्तात् अपरो गोत्रप्रत्ययो न भवति—ततोपि सुस्पष्टमेव यत्— फक् ( आयन ) यूनि एव स्यात्। किन्तु अत्र गोत्राधिकारस्य उत्तरार्थः। अत्र फक्प्रत्यय इञप्रत्ययं बाधते। हरितादिर्यथा—हरित, किन्दास, वह्यस्क, अर्कलूष, वध्योग, विष्णुवृद्ध, प्रतिबोध, रथन्तर, रथीतर, गविष्टिर, निषाद, शवर, अलस, मठर, सूपाकु, मृडु, पुनर्भू, पुत्र, दुहितृ, ननान्दृ, परस्त्री, परशु च ॥

## ११०३। यञिञोश्च। ४।१।१०१॥

दी—। गोत्रे यौ यञिञौ तदन्तात् फक्स्यात्। 'अनाति-' इत्युक्तेः 'आपत्यस्य' ( सू १०८२ ) इति यलोपोन। गार्ग्यायणः। दाक्षायणः।

The words ending in यञ् and इञ् in गोत्राधिकार i.e., words after which गोत्रप्रत्यय यञ् and general अपत्यप्रत्यय इञ् are attached take फक् in the sense of युवप्रत्यय। That फक् is in the sense of युवप्रत्यय is by inference as in the case of the sutra हरितादिभ्योऽञः।

See "सामर्थ्यात् यूनि अयम्" ( in the previous rule ). Thus गर्ग + गोत्रा-पत्य यञ् by गर्गादिभ्योयञ् = गार्ग्य । Then गार्ग्य + फक् ( आयन ) गार्ग्यायण: ( without य-लोप ) । गार्ग्य ends in अपत्य य-प्रत्यय and य-प्रत्यय comes after ग्, a हल् letter, so the rule "आपत्यस्य च तद्धिते अनाति" should direct elision of this य, when a further तद्धित affix follows; but as this rule by 'अनाति' says that this elision of य is not to take place when an affix beginning with आ follows, so here in गार्ग्य + आयन, the य does not elide yielding गार्ग्यायण: । Similarly दक्ष + इञ (अपत्य) = दाक्षि, then दाक्षि + फक्(आयन) = दाक्षायण ।

मित—। 'तदन्तात् फक्' इति = सामर्थ्यात् अयं फक्प्रत्ययो यूनि एव स्यात् । यत: गोत्रप्रत्ययात् अपरो गोत्रप्रत्ययो न भवति, "एकोगोत्रे" इति सूत्रात् । सर्वमेतत् पूर्वसूत्रे कथितम् । तत: गर्ग + गोत्रपत्ये यञ् ("गर्गादिभ्यो यञ्" इति ) = गार्ग्य । तत: युवापत्ये गार्ग्य + फक् ( अनेन सूत्रेण ) = गार्ग्यायण । 'गार्ग्य + आयन'—इत्यत्र यद्यपि अपत्य—यप्रत्ययो हल: पर एव, तथापि न लुप्यते, यत: परत: आयनप्रत्ययस्य आकार: अस्त्येव । "आपत्यस्य—च तद्धिते अनाति: इति सूत्रे 'आति'—लोप: न स्यात् आकारे परे—इति व्याख्यानात्, अत: आह—"अनातिइत्युक्ते:···यलोपोन" । दाक्षायण इत्यत्र तु दक्ष + अपत्य इञ् = दाक्षि ; तत: इञन्तात् फक् ज्ञेय: । दाक्षि + आयन = दाक्षायण: ।

११०४। शरद्वच् — शुनक — दर्भाद् भृगु — वत्साग्राय-णेषु । ४।१।१०२ ॥

टी—। गोत्रे फक् । अञिञोरपवाद: । आद्यौ विदादौ । शारद्वतायनो भार्गवश्चेत्, शारद्वतोऽन्य: । शौन-कायन: वात्स्यश्चेत्, शौनकोऽन्य: । दार्भायण: आग्रायणश्चेत् । दार्भिरन्य: ।

The words शरद्वत्, शुनक and दर्भ take the affix फक् in the sense of गोत्रापत्य, provided these respectively refer to भृगु, वत्स and आग्रायण। शरद्वत् and शुनक are read in the विदादि list, so these are to take अञ् in the sense of गोत्र ; but this rule provides for फक् in the sense of भृगु and वत्स only. Thus शरद्वत्+फक् ( आयन )=शारद्वतायन meaning भार्गव ( son of भृगु ), otherwise the form is शारद्वत ( with विदादि अञ् )। Similarly शौनकायन in the sense of son of वत्स ; otherwise we get शौनक ( with विदादि अञ् ) ; thus also दार्भायण with फक् in the sense of आग्रायण, otherwise the form is दार्भि ( with इञ् by अत इञ् or बाह्वादेराकृतिगणत्वात्—बाह्वादिइञ् )।

मित—। शरद्वत्शुनकशब्दाभ्यां विदादिगणे पाठात् आभ्याम् गोत्रे अञ् स्यात् ( "विदादिभ्यो ऽञ्" इति सूत्रात् ) ; किन्तु अर्थविशेषे गोत्रे आभ्याम् अनेन सूत्रेण फगेव विधीयते न तु अञ, अत आह—"गोत्रे फक्···आद्यौ विदादौ"। दर्भशब्दः शरद्वदादिवत् ऋषेः रूढ़ः। अस्मात् अदन्तत्वात् बाह्वादित्वात् वा इञ् प्राप्तः, स च अर्थविशेषे (आग्रायण-ऋष्यर्थे इत्यर्थः) अत्र निषिध्यते, फक् च विधीयते ; अत आह—"अञ्इञोरपवादः"—आद्यशब्दद्वये अञ् बाध्यते, शेषे च इञ् बाध्यते इति सरलार्थः ॥ अन्यत् सुगमम्।

## ११०५। द्रोणपर्वत-जीवन्तादन्यतरस्याम् ४।१।१०३ ॥

**दी—। एभ्यो गोत्रे फक् वा। द्रोणायनः—द्रौणिः। पार्वतायनः—पार्वतिः। जैवन्तायनः—जैवन्तिः। अनादिरिह द्रोणः ; अश्वत्थाम्न्यनन्तरे तूपचारात्।**

The words द्रोण, पर्वत and जीवन्त (all designations of persons) optionally take the affix फक् in the sense of गोत्र ( i. e, descendant grandson etc. ) ; being अदन्त or these being बाह्वादि these

words are to take इञ् in the sense of अपत्य ( here अपत्यसामान्य )। Thus we get द्रौणायन with फक् and द्रौणि with इञ् and so on. The word द्रोण here does not refer to the well-known first person ( आदिपुरुष ) of that name in Mahabharat, so our author says "अनादि: इह द्रोण:"। Hence also द्रौणायन cannot be applied to अश्वत्थामन् the son of आदि द्रोण। That द्रौणायन is applied to अश्वत्थामन् first Drona's immediate next son is by transference only ( cp.—आध्यारोपेण तथाभिधानं भवति )।

मित—। अत्र सर्वं निःसन्दिग्धम्। द्रोणादिभ्य: गणभावे न बाह्वादेराकृति-गणत्वात् पक्षे अदन्तत्वात् वा इञ् स्यात्। अत: आह—"द्रौणायन:—द्रौणि:" इत्यादि। एवं द्रोणशब्द: महाभारतस्य आदि-द्रोणस्य न वाचक:, भाष्यं तथा व्याख्यानात्, अत आह—"अनादि: इह द्रोण:" ( यद्वा—अनादि: अप्रसिद्ध: अन्य: कश्चित् द्रोण इह गृह्यते इत्यर्थ: )। ततश्च आदिद्रोणस्य अनन्तरं पुत्रं अश्वत्थाम्नि द्रौणायनादिप्रयोग: अयुक्त:, किन्तु अश्वत्थाम्नि अपि यत् "द्रौणायन:" प्रयुज्यते तत्, उपचारात् ज्ञेयम्, अत आह—"अश्वत्थाम्नि अनन्तरं तु उपचारात्"।

११०६। अनृष्यानन्तर्य्ये विदादिभ्योऽञ् ।४।१।१०४॥

टी—। एभ्योऽञ् गोत्रे, ये त्वत्रानृषय: पुत्रादयस्तेभ्य: आनन्तर्य्ये। सूत्रे स्वार्थे ष्यञ्। विदस्य गोत्रापत्यं वैद:। अनन्तरो वैदि: बाह्वादेराकृतिगणत्वात् इञ्। पुत्रस्यापत्यं पौत्र:। दौहित्र:।

Words of the विदादि class take अञ् in the sense of गोत्र ( grandson &c ); but these words of the विदादि class which refer to non-sages i. e. to names of persons who are not sages e. g. पुत्र, दुहितृ &c. take अञ् in the sense of अनन्तरापत्य i.e. son. Thus the word आनन्तर्य्य in the sutra has sense of अनन्तर ; In

other words अनन्तर takes स्वार्थे ष्यञ् ( like words of the चतुर्वर्ण class ) yielding आनन्तर्य्य। Thus विद+अञ् गोत्रापत्य=वैदः ( here विद being the name of a sage) ; but विदस्य पुत्रः ( अनन्तरः ) = विद + इञ् ( बाह्वादि )=वैदिः though विद is not directly noted in the बाह्वादि list still it being आकृतिगण, we include विद in the above list. But पुत्रस्य अपत्यम् ( son )=पुत्र+अञ् ( अनन्तरार्थे )=पौत्रः। Similarly दौहित्र। पुत्र and दुहितृ being names of non-sages take अञ in the sense of अनन्तरापत्य (son only)।

मित—। न ऋषि इति अनृषि, लुप्तपञ्चम्येकम् पदम्। तथा च वक्ष्यति "अनृषीति पञ्चम्या सौत्रो लुक्"। ततः अनृषिभ्यः इति तदर्थः जायते। एवम् सूत्रमिदं द्विधा विभज्यव्याख्यायते, प्रथमं यथा—"विदादिषु अनृषिभ्यः शब्देभ्यः आनन्तर्य्ये अञ्"; द्वितीयं तु—"विदादिषु ऋषिवाचकशब्देभ्यो गोत्रे एव अञ् स्यात्"। तथा हि—विदादिगणे ऋषयः अनृषयः च पठ्यन्ते। तत्र ये अनृषयः पुत्रादयः शब्दाः तेभ्यः अनन्तरापत्ये अञ् भवति ; अन्यत्र तु गोत्रे एव अञ् स्यात्। आनन्तर्य्ये इत्यस्य अनन्तरे अपत्ये इत्यर्थः। अनन्तरशब्दात् स्वार्थे ष्यञि आनन्तर्य्यमिति, चतुर्वर्णादिवत् स्वार्थे ष्यञ्; अत आह—"सर्व स्वार्थे ष्यञ्"। एवम् अनेन सूत्रेण विदशब्दात् गोत्रार्थे अञि सति वैदः लभ्यते। विदशब्दस्य ऋषिवाचकत्वात् गोत्रे अञ्, अस्मात् अनन्तरापत्यार्थे अञ् न भवति, किन्तु—बाह्वादेराकृतिगणत्वात्, बाह्वादि—इञि सति 'वैदिः' इति लभ्यते, तत आह—"विदस्य गोत्रापत्यं वैदः। अनन्तरो वैदि—बाह्वादेराकृतिगणत्वात् इञ्"। पुत्रशब्दस्य अनृषित्वात् आनन्तरापत्ये अञ्, ततः पौत्रः लभ्यते।

विदादिर्यथा—विद, उर्व, कश्यप कुशिक, भरद्वाज, उपमन्यु, किलात, किन्दर्भ, विश्वानर, ऋष्टिषेण, ऋतभाग, हर्यश्व; प्रियक, आपस्तम्ब, कूचवार, शरद्वत्, शुनक, धेनु, गोपवन, शत्रु, बिन्दु, भाजक, भाजन, अश्वावतान, श्यामाक, श्यामक, श्यावलि, हरित, किन्दास, वह्यस्क, अर्क, लूष, वध्योग, विष्णुवृद्ध, प्रतिबोध रथीतर, रथन्तर, गविष्ठिर, निषाद, शबर, अलस, मठर, मृपाकु, मृदु, पुनर्भू, पुत्र, दुहितृ, ननान्दृ, परस्त्री, परशु च॥

१,१०७। गर्गादिभ्यो यञ् ।४।१।१०५ ॥

टी—। 'गोत्रे' इत्येव। गार्ग्यः। वात्स्यः।

In the sense of गोत्र ( grandson &c ), words of the गर्गादि class take the affix यञ्। Thus we get गर्ग + यञ् = गार्ग् + यञ् ( by "यस्येतिच" ) = गार्ग्य ( with आदिवृद्धि )। Similarly वात्स्य।

N. B.—In गार्ग्यो जामदग्न्यः and in पाराशर्य्यः व्यासः, जमदग्नि and पराशर take यञ् to denote son ( अनन्तरापत्य ) irregularly or by गोत्वारोप : जमदग्नि and पराशर are read in this गर्गादि list—( see Balamanorama also ).

मित—। सुगमा—। गर्गादिर्यथा—गर्ग, वत्स्य, वाजासे ( 'असे' असमासे 'वाज'—शब्दः अत्र पठ्यते इत्यर्थः ) संस्कृति. अज, व्याघ्रपात्, विदभृत्, प्राचीनयोग, अगस्ति, पुलस्ति, चमस, रेभ, अग्निवेश्य, शङ्ख, शठ, शक, एक, धूम, अवट, मनस्, धनञ्जय, वृक्ष, विश्वावसु, जरमाण, लोहित, संशित, बभ्रु, वल्गु, मण्डु, गण्डु, लिङ्गु, गहल्, मन्, मङ्क्, अलिगु, जिगीषु, तन्तु, मनायी, सून, कत्थक, कथक, कचा, टच, तनु, तरक्त, तलुक्ष, तण्ड, वतण्ड, कपि, कत, कुरुकत, अनडुह्, कण्व, शकल, गोकक्ष, अगस्त्य, कुण्डिनी, यज्ञवल्क, पर्णवल्क, अभयजात, विरोहित, वृषगण, रहूगण, शण्डिल, चणक, चुलुक, मुद्गल, मुसल, जमदग्नि, पराशर, जतुकर्ण, महित, मन्त्रित, अश्मरथ, शर्कराक्ष, पूतिमाष, स्थूर, अररका, एलका, पिङ्गल, कृष्ण, गोलन्द, उलूक, तितिक्ष, भिषज्, तड्डित, भडित, दल्भ, चेकित, चिकित्सित, देवहू, इन्द्रहू, एकलू, पिप्पलू, वृहदग्नि, सुलाभिन्, उक्थ, कुटीग ॥ "मानवी प्रजा" इति तु अपत्यसामान्ये भविष्यति।

१०१८। यञञोश्च २।४।६४ ॥

टी—। गोत्रे यद्यञन्तमञन्तं च तदवयवयोरेतयो र्लुक् स्यात् तत्कृते बहुत्वे, न तु स्त्रियाम्। गर्गाः, वत्साः, विदाः, उर्वाः। तत्कृते इति किम् ?—प्रियगार्ग्याः। स्त्रियां तु—गार्ग्यः

स्त्रियः। गोत्रे किम्? द्वैप्याः, औत्साः। प्रवराध्यायप्रसिद्धमिह गोत्रम्। तेनेह न—पौत्राः, दौहित्राः।

Words that end in यञ् and अञ् in the sense of गोत्र (descendant पौत्र), have their यञ् and अञ् elided, if plurality due to those affixes is denoted ( तत्कृते बहुत्वे ) but not in the feminine. Thus गर्गस्य गोत्रापत्यानि gives गर्ग + यञ् = गर्गाः ( with यञ् elided for we have plural idea in the gotra-sense ); similarly we get विदाः and ऊर्वाः [with elision of अञ् ( "अनृष्यानन्तर्ये बिदादिभ्योऽञ्" ) and there being plural idea as well ]. Why do we say 'तत्कृते' in the vritti of this sutra? witness प्रियः गार्ग्यो येषाम् = प्रियगार्ग्याः ( here यञ् does not elide, for here बहुत्व i. e. plurality is not due to the affix यञ्, but the compond refers to others ). This rule does not hold good in the feminine, so in feminine gender we have गर्गस्य अपत्यानि स्त्रियः = गर्ग + यञ् + ङीप = गार्ग्य + ङीप् = गार्गी ( य् eliding by "हलस्तद्धितस्य" )—which in fem. plural gives गार्ग्यः स्त्रियः। why do we say गोत्रे here? witness द्वैप्याः ( द्वीपेभवा इति यञ् by "द्वीपादनुसमुद्रम्" ) and औत्साः ( with भवार्थे अञ् by "उत्सादिभ्योऽञ्" )—here यञ् and अञ् do not elide though plurality due to these very affixes is involved, for the sense of गोत्र is not at all denoted here. And by गोत्र here in this sutra we are to understand the गोत्र originated with the sages as enumerated in the chapter on प्रवर ( प्रवराध्याय ) in the Srauta sutras of Baudhayana &c. for this sutra is outside अपत्याधिकार ( see ante also under sutra 1089 )। Hence the अञ् in पौत्राः and दौहित्राः does not elide for though—here we have plural idea due to अञ् still the गोत्र of a sage is not at all connoted here.

[ N. B.—Note that now—a—days गोत्र is usually 24 in number ( vide धर्मप्रदीप &c. ); and sutras say that प्रवर is that type of गोत्र which is promoted by seven original sages ( cf. कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः । जमदग्निर्वशिष्ठश्च सप्तैते ऋषयः स्मृताः") i. e., it is ऋषिप्रवर्तित गोत्रविशेष ; and in अपत्याधिकार from the use of the general word गोत्र and not the technical word गोत्र we are to understand शास्त्रीय गोत्र ( cf. अपत्याधिकारे गोत्रग्रहणादेव शास्त्रीय-गोत्रं गृह्यते"—) ; so also पुत्रस्य पुत्रः gives पौत्र with विदादि अञ् and this अञ् does not elide for 'issue' is meant here and not any शास्त्रीय गोत्रत्व ].

भित—। द्वितीयाध्यायस्य चतुर्थपादस्थमिदं सूत्रम्, न तु अपत्याधिकारस्थम्। अतः अत्र तद्धितग्रहणमस्ति। "यस्कादिभ्यो गोत्रे" इति सूत्रात् 'गोत्रे' इत्यनुवर्त्तते। 'तद्राजस्य बहुषु तेनैवास्त्रियाम्" इत्यस्मात् 'तद्राजस्य' इति वर्जयित्वा सर्वमनुवर्त्तते। 'लुक्' इति च "ण्यक्षत्रिय—"सूत्रात् लभ्यते। अत आह—गोत्रे यद् यञन्तम् अञन्तं च तदवयवयोः एतयोः ( यञञोरित्यर्थः ) लुक् स्यात् तत्कृते बहुत्वे ( यञ्-अञ प्रत्ययकृतबहुत्वे ), न तु स्त्रियाम् ( स्त्रियां लुक् न स्यात् इत्यर्थः )"। एवं सति गर्गाः, वत्साः इति (गोत्रे यञन्ताः बहुत्वे द्योत्ये यञः लुका सिद्धाः)। एवं क्रमेण अञो लुका विदाः, ऊर्वाः इति स्थितम् ( "अनृष्यानन्तर्ये विदादिभ्योऽञ्" इति अञो लुका सिद्धम् )। अत्र 'तत्कृते' इति किमर्थमुक्तम् ? प्रियः गार्ग्यो येषाम् इति बहुव्रीहौ—'प्रियगार्ग्याः' इत्यत्र यञ्प्रत्ययगतबहुत्वाभावात् प्रत्ययस्य लुक् न स्यात्। स्त्रियाम् लुक् न स्यात्—अतः गार्गस्य अपत्यानि स्त्रियः इत्यत्र गर्ग + यञ् = गार्ग्य + ङीप् गार्गी "हलस्तद्धितस्य" इति य्-लोपः, ततः बहुवचने 'गार्ग्यः' (यञ् प्रत्ययस्य तु लुक् न स्यात् )। 'गोत्रे" इति किमर्थमुक्तम् ? द्वीपे भवा इति द्वीप + यञ् ( "द्वीपादनुसमुद्रम्" इति सूत्रेण ) द्वैप्याः, एवं औत्साः ( उत्सादिभ्योऽञ् )—अत्र गोत्रप्रत्ययत्वाभावात् यञः अञश्च लुक् न स्यात्॥ एतत् सूत्रम् अपत्याधिकार-वहिर्भूतम् अतः अत्र बौधायनादिसूत्रकारपठितस्य प्रवराध्यायगतस्य गोत्रस्य एव

ग्रहणं स्यात्। "कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः। जमदग्निर्वशिष्ठश्च सप्तैते ऋषयः स्मृताः॥"—तेषां यदपत्यं तद्गोत्रमित्याचक्षते इति बोधायनादि—प्रवराध्यायप्रसिद्धाः भृग्वादय एव गोत्रत्वेन विवक्षिता इत्यर्थः। कैयटेन लौकिकस्य गोत्रस्य ग्रहणमिति भाष्यमुपादाय तथैव व्याख्यातत्वात् इति भावः। एवं पौत्राः दौहित्राः इत्यादौ पौत्रदौहित्रयोः तथाविधगोत्रवाचित्वाभावात् न लुक् इति वाच्यम्" (इति बालमनोरमा)।

## ११०८। मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ।४।१।१०६४

**दी—। गोत्रे यञ्। माधव्यो ब्राह्मणः। माधवोऽन्यः। बाभ्रव्यः कौशिकर्षिः। बाभ्रवोन्यः। बभ्रुशब्दस्य गर्गादिपाठात् सिद्धे पि नियमार्थमिदम्। गर्गादिपाठफलं तु लोहितादि-कार्य्यम्। बाभ्रव्यायणी।**

The words मधु and बभ्रु take the affix यञ् to denote गोत्र when meaning 'ब्राह्मण' and sage Kausika (कौषिक ऋषि) respectively; thus we get माधव्यः ब्राह्मणः (मधु + यञ = मधो + यञ् by "ओर्गुणः" = माधव्य with आदिवृद्धि and सन्धि); otherwise the form is माधवः with अण् &c. Similarly we get बाभ्रव्य in the sense of sage कौषिक otherwise बाभ्रवः। बभ्रु is read in the गर्गादि list, still special mention and formation with यञ् is to restrict it (नियमार्थ) in this special sense of 'sage'; and the aim to read it in the गर्गादि list is to attach compulsory ष्फ to the यञन्त word बभ्रु in the feminine by the rule "सर्वत्र लोहितादिकतन्तेभ्यः" (ante); and लोहितादि list is within the गर्गादि list i.e., the words beginning with लोहित in the गर्गादि list are लोहितादि। So Bhattoji says "गर्गादि पाठफलम् तु लोहितादिकार्य्यम्"। Thus we

get बभ्रु + यञ + ङीप् = बाभ्रव्य + स्फ (आयन) + ङीप् = बाभ्रव्यायणी ( षित्वात् ङीष् )।

मित—। मधुशब्दात् बभ्रुशब्दात् च गोत्रापत्यं यञ् स्यात् 'ब्राह्मणे', 'कौशिकऋष्यर्थे' च इत्यर्थः ॥ बभ्रुशब्दस्य गर्गादि-पाठादेव गोत्रे यञि सिद्धेऽपि अत्र पठात् इदं नियम्यते यत्—यदि बभ्रुशब्दात् यञ् स्यात् गोत्रं, तदा कौशिकऋष्यर्थे एव, नान्यत्रार्थे। एवं सति बभ्रुशब्दस्य गर्गादिपाठोऽयुक्तः स्यात् इत्याशङ्क्याह—बभ्रुशब्दस्य गर्गादिपाठफलं तु स्त्रियामस्मात् यञन्तात् "सर्वत्रलोहितादिकतन्तेभ्यः" इति स्फ—प्रत्ययः यथा स्यात् तदर्थम्। ततश्च बाभ्रव्य + स्फ = बाभ्रव्यायणी (षित्वात् ङीष्) सिध्यति।

## ११२०। कपिबोधादाङ्गिरसे ।४।१।१०७॥

**गोत्रे यञ् स्यात्। काप्यः। बौध्यः। 'आङ्गिरसे' किम्। कापेयः। बौधिः।**

The words कपि and बोध take यञ् in the sense of गोत्रापत्य if आङ्गिरस गोत्र is signified thereby. Thus काप्य and बौध्य are got with यञ् to denote आङ्गिरस गोत्र। Why do we say 'आंगिरसे' in the sutra? If आङ्गिरस गोत्र is not meant then in गोत्रापत्य the words will take ढक् and इञ् respectively by the rules "इतश्चानिञः" and "बाह्वादिभ्यश्च" &c.

मित—। कपिशब्दः बोधशब्दश्च गोत्रे यञ्प्रत्ययं लभते यदि तेन आङ्गिरसगोत्रं गम्यते। अन्यथा, कपिशब्दात 'इतश्चानिञः' इति ढक्। बोध-शब्दात् "बाह्वादिभ्यश्च" इति इञ् स्यात्। कापेयः बौधिश्च सिध्येत्। अतः सूत्रे 'आङ्गिरसे' ( आङ्गिरसात्मकं गोत्रं इत्यर्थः ) उच्यते। कपिशब्दात् गर्गादिपाठादेव यञि सिद्धे अत्र नियमार्थं पठ्यते। गर्गादिपाठफलम् तु लोहितादिकार्य्यम्; बोधशब्दात् अप्राप्ते विधिः।

राजनः with प्रकृतिभाव by this rule ; why do we say भावकर्मणोः in the sutra ? Witness राज्यम् with यक् ( by "पत्यन्त पुरोहितादिभ्यो यक्" )—here there is no प्रकृतिभाव for य comes in the sense of भाव and कर्म ( see the rule "ये चाभावकर्मणोः" ) ।

मित— । सुगमा ॥

११५६ ॥ संयोगादिश्च ॥६।४।१६६ ॥

**टी— । इन् प्रकृत्या स्यात् अणिपरे । चक्रिणोऽपत्यं चाक्रिणः ।**

Similarly the इन्नन्त base ( base ending in इन् ) but having a conjunct letter before the इन्, remains unchanged ( withot टि-लोप ) when अण् follows. Thus चक्रिन् + अण् = चाक्रिणः ( without टिलोप ) + and here "क्र" is the conjunct letter before इन् ।

मित— । संयोगादिः इन् प्रकृत्या स्यात् अणि परे इति सूत्रार्थः । "इन् अण्यनपत्ये" इत्यतः 'इन् अणि' इति, "प्रकृत्यैकाच्" इति सूत्रात् "प्रकृत्या" इति चानुवर्त्तते । ततः उक्तोऽर्थो लभ्यते । अन्यत् सुगमम् ॥

११५७ ॥ न मपूर्वोऽपत्येऽवर्मणः ॥६।४।१७० ॥

**टी— । मपूर्वोऽन् प्रकृत्या न स्यात्अपत्ये अणि । भाद्रसामः । 'मपूर्वः' किम् ? सौत्वनः । 'अपत्ये' किम् ? चर्मणा परिवृतः चार्मणो रथः । 'अवर्मणः' किम् ? चक्रवर्मणोऽपत्यं चाक्रवर्मणः । "वा हितनाम्न इति वाच्यम्" (वार्तिक) हितनाम्नः अपत्यं हैतनामः—हैतनामनः ।**

A base ending in अन् but preceded by "म" does not remain as usual but elides its टि- portion, when अण् in the sense of अपत्य follows. Thus भद्रसामन् + अण् ( अपत्यं ) भाद्रसाम

(with टि लोप)। Why do we say मपूर्वः in the sutra? Witness सुत्वन: अपत्यम् = सुत्वन् + अण् = सौत्वन: with प्रकृतिभाव i.e. without टिलोप, for here अन्नन्त word सुत्वन् has no "म" before its अन् portion. Why do we say अपत्ये in the sutra? Witness चार्मण: रथ: with प्रकृतिभाव, for here अण् has sense of अनपत्य। Why again do we say अवर्मण: here? Witness चक्रवर्मण् + अण् (अपत्ये) = चाक्रवर्मण: with प्रकृतिभाव in अपत्ये अणि, for the sutra enjoins this in the case of वर्मन् by saying "अवर्मण:"। The base हितनामन् though has म preceding अन्, still will optionally remain as usual (प्रकृत्या) when अपत्ये अण् follows; thus हितनामन् + अण् (अपत्ये) = हैतनाम (without प्रकृतिभाव) and हैतनामन: (with प्रकृतिभाव)।

मित—। "अणि अन् प्रकृत्या स्यात्"—इत्यस्य प्रतिप्रसवमाह "मपूर्वः अन् प्रकृत्या न स्यात् अपत्ये अणि"॥ भाद्रसाम:—अत्र अन: मपूर्वत्वात् न प्रकृतिभाव:॥ सूत्रे "मपूर्व"—कथनात्, 'सौत्वन' इत्यत्र मपूर्वत्वाभावात् प्रकृतिभाव एव॥ सूत्रे "अपत्ये" इति विशिष्याभिधानात् 'चार्मणो रथ:' इत्यत्र अपत्यार्थत्वाभावात् प्रकृतिभाव एव॥ सूत्रे पुनश्च 'अवर्मण' इति कथनात् 'चाक्रवर्मण:' इत्यत्र वर्मन्-शब्दसत्वात् प्रकृतिभाव:॥ "न मपूर्व:" इति प्रतिषेधे प्राप्ते वार्त्तिकमुपन्यस्यति—'हित-नामन्-शब्दस्य अपत्ये अणि प्रकृतिभावो वा स्यात्' इत्यर्थ:। एवम् हितनामन् + अण् = हैतनाम: (प्रकृतिभावो न), हैतनामन: (प्रकृतिभाव:)॥

११५८॥ ब्राह्मोऽजातौ ॥६।४।१७१॥

टी—। योगविभागोऽत्र कर्त्तव्य:। 'ब्राह्म:' इति निपात्यते अनपत्ये अणि। ब्राह्मं हवि:। ततोजातौ—अपत्ये जातावणि ब्रह्मण: टिलोपो न स्यात्। ब्रह्मणोऽपत्यं ब्राह्मण:। अपत्ये किम्? ब्राह्मी औषधि:।

From the wording of the sutra ब्राह्मः अजातौ, the meaning is that the word ब्राह्म is got with अण् and टिलोप when जाति (अपत्य) is not meant (cp. "जातावपत्ये निषेधः")। But how then are we to get the form ब्राह्मी (in अनपत्य but जाति) and ब्राह्मण (with अण् in the sense of जाति and अपत्य)? So Bhattoji says that we are to divide the sutra thus—(i) "ब्राह्मः" i.e ब्राह्म is allowed and irregularly formed with अण् in the sense of अनपत्य (not descendent),—ब्राह्मं हविः, ब्राह्मः संस्कारः, ब्राह्मं सरः, ब्राह्मी औषधिः etc. or in the general sense of अपत्य (but not in the sense of जाति) as ब्राह्मः नारदः ; comp "ब्राह्मशब्दोऽपत्येऽनपत्ये चेष्यते" Kaiyata. Then as (ii) जातौ—(अपत्ये), the word ब्रह्मन् does not elides its टि—portion when the affix अण् follows yielding ब्रह्मणः अपत्यं (जातिः) = ब्राह्मणः। why do we say अपत्ये here? —Witness ब्राह्मी औषधिः where there is टिलोप for अनपत्य जाति is meant.

मित—। ब्राह्मः अजातौ इति सवर्ष्क्रंदः। अजातौ—न तु जातौ (अपत्ये); जातावपि ब्राह्मशब्दस्य निपातनं पक्षान्तरे ब्राह्मण शब्दस्य च साधनं दर्शयितुमाह— "योग विभागः अत्र कर्त्तव्यः" इति। "ब्राह्मः" इति एकं सूत्रम्—तदर्थोयथा, ब्राह्म इति—अनपत्ये अणि निपात्यते। तत्र जातौ—यथा ब्राह्मी औषधिः ; अजातौ च—यथा ब्राह्मं हविः इत्यादि। तथा भाष्यम् "ब्राह्म इति निपातनं अपत्ये अजातौ इति"।................"या जातिश्च नापत्यं ब्राह्मी औषधिरिति"।........"जातौ", इति द्वितीयं सूत्रम्—अत्र "अपत्ये" इत्यनुवर्त्तते ; अर्थो यथा—जातौ अपत्ये अणि ब्रह्मन्शब्दस्य टिलोप न स्यात्। ब्रह्मणः अपत्यम् इति ब्रह्मन् + अण् = ब्राह्मणः। अत्र 'जातौ अपत्ये' इति कथनात्, अनपत्ये जातौ तु—ब्राह्मी औषधिः इति। सर्वमेतत् योगविभागस्य फलम्। पूर्वसूत्रात् "अपत्ये अणि प्रकृत्या न स्यात्" इति अनुवर्त्तनात् अ.ह—अपत्ये जातौ ब्रह्मणष्टिलोपो न स्यात् इति। योगविभागस्तु काशिकायाम् अपि "योगविभागोऽत्र क्रियते। ब्राह्मइत्येतत् निपात्यते। अपत्ये

जातावणि न भवति"—। सर्वमेतत् भाष्यसम्मतम्। "ब्राह्मीजातौ" इत्यपि सूत्रपाठः सम्भवति। अर्थश्च योगविभागेन पूर्ववदेव।

११५९। औक्षमनपत्ये ॥ ३।४।१७३ ॥

**टी—। अणि टिलोपो निपात्यते। औक्षम् पदम्। अपत्ये किम्?—उक्ष्णोऽपत्यम्=औक्ष्णः।**

टि-लोप is irregularly enjoined to the word औक्ष formed with अण् but not in the sense of अपत्य। Thus we get औक्षम् पदम् ( with टिलोप )। This sutra bars the rule "अन्" which enjoins प्रकृतिभाव to अन्नन्त words when अण् follows. Why do we say अनपत्ये in the sutra? witness उक्षन्+अण् (अपत्ये)=औक्ष्णः (without टिलोप)। But the question is—how do we get उक्षन्+अण्=औक्ष्णः (with अल्लोप) and not औक्षण ( with प्रकृतिभाव), and hence we look ahead—

मित—। सूत्रमिदम्—"अन्" इति प्रकृतिभावस्य अपवादः। स च अपवादः "अनपत्ये" एव। अपत्ये तु प्रकृतिभावः स्यादेव। एवमुक्ताः अपत्याम् इत्यत्र उक्षन्+अण्=औक्ष्णः। अत्र कथम् अल्लोपः, न तु प्रकृतिभावः—अतः सूत्रान्तरमुपन्यस्यति—

११६०। षपूर्वहन्धृतराज्ञामणि ॥६।४।१६५॥

**टी—। षपूर्वो यः अन् तस्य, हनादेश्च भस्य अतः लोपः अणि। औक्ष्णः। ताक्ष्णः। भ्रौणघ्नः। धृतराज्ञोऽपत्यं धार्त्तराज्ञः। 'षपूर्वः—' इति किम्? साम्नोऽपत्यं सामनः। अणि किम्? ताक्षण्यः।**

The (उपधा) अ elides when the तद्धित affix अण् follows, of bases ending in अन् but having 'ष' preceding, of bases ending

in हन् and of the base धृतराजन्। Thus उक्षन्+अण्=औक्ष्णः (with अल्लोप); similarly we get ताक्ष्ण, भ्रौणघ्न, वार्त्रघ्न, धार्त्तराज्ञ। why do we say 'षपूर्व—' in the sutra? Witness सामनः (without अल्लोप), for here 'म' precedes अण्। [Note that in सामन, the rule "न मपूर्वोऽपत्ये" (1157) does not apply for this rule requires प्रकृतिभाव निषेध in जाति only]; why do we say अणि here? witness ताक्षण्य (with तक्षन्+ण्य enjoined by the rule "सेनान्तलक्षणकारिभ्यश्च")—here there is no अल्लोप though अन् has 'ष' preceding it; for here the affix is not अण् but ण्य।

मित—। "अल्लोपोऽनः" इति सूत्रमत्र वर्त्तते। भाधिकारः अस्त्येव, अत आह—"षपूर्वो यः अन् तस्य, हनादेश्च भस्य अतः लोपः स्यात् अणि"। सत्र षपूर्वकथनात् मपूर्वस्य अल्लोपो न स्यात्—ततः सामन इति। [अत्र 'न मपूर्वोऽपत्येऽवर्मणः" इति प्रकृतिभावनिषेधो न स्यात्, यतः स निषेधो जातावेव इति फलितं भाति]॥ 'अणि' परे एषनियमः, अतः 'ताक्षण्य' इत्यत्र ण्य-प्रत्यये सति अल्लोपो न स्यात्॥

११६१। क्षत्राद्घः॥ ४।१।१३८॥

दी—। 'क्षत्रियः'। जातौ इत्येव। क्षात्रिरन्यः।

The word क्षत्र takes the affix घ (इय) in the sense of अपत्य and जाति। Thus क्षत्र+घ=क्षत्रियः in the sense of जाति (and अपत्य)। Otherwise the form is क्षात्रि i.e.' one born from a क्षत्रिय in a शूद्रा।

मित—। क्षत्रात् शूद्रादौ जातः क्षात्रिः, न तु क्षत्रियजातिः॥

११६२। कुलात्खः॥ ४।१।१३९॥

दी—। कुलीनः। तदन्तादपि। उत्तरसूत्रे 'अपूर्वपदात्' इति लिङ्गात्—आढ्यकुलीनः।

The word कुल takes the affix ख (ईन) in the sense of अपत्य। From the word 'अपूर्वपदात्' in the following rule, we infer that कुल also takes ख (तद्धिते) when final in a word. The use of the epithet अपूर्वपदात् in the next rule qualifying "कुलात्", shows that there was प्राप्ति of ख to कुल having पूर्वपद as well. Hence Bhattoji says "तदन्तादपि—उत्तरसूत्रे 'अपूर्वपदात्' इति लिङ्गात्"। Thus we get both कुलीन and आढ्यकुलीन with ख (तद्धिते)।

सि०—। अपत्यं कुलशब्दात् ख-प्रत्ययः स्यात्। तस्य ईनादेशः इति उक्तं भवेत्। "आयनेयीनीयियः" तदन्तविधिनिषेधात् कुलान्तात् शब्दात् कथं खः स्यात्? इत्यत्रोत्तरमाह—उत्तरसूत्रे 'अपूर्वपदात् कुलात्' इति कथनात् ज्ञायते यदत्र सूत्रे कुलान्तात् शब्दादपि खप्रत्ययस्य प्राप्तिरासीत्। ततश्च आढ्यकुलीनः, महाकुलीन इत्यादि सिध्यति।

**११६३ ॥ अपूर्वपदादन्यतरस्याम् यड्-ढकञौ ॥४।१।१४०॥**

**टी—। 'कुलात्' इत्यत्र व। पक्षे खः। कुल्यः, कौलेयकः, कुलीनः। 'पद' ग्रहणं किम्? बहुकुल्यः—बाहुकुलेयकः—बहुकुलीनः।**

The base कुल having no पूर्वपद preceding it optionally takes यत् and ढकञ् (एयक); in the alternative ख also comes in. Thus कुल्य (with यत्), कौलेयक (with ढकञ्) and कुलीन (with ख)। Why do we say 'पद' in अपूर्वपदात् in the sutra? Witness बहुकुल with बहुच्—प्रत्यय before the word कुल; now here बहुच् (बहु) not being a पद but a प्रत्यय only by the rule "विभाषा सुपः" —कुल is no longer preceded by पूर्वपद, so the rule even now applies and we get बहुकुल्य, बाहुकलेयकः, and बहुकुलीनः।

मित—। पूर्वपदरहितात् कुलशब्दात् यत्, ढकञ् भवतः। पक्षे यथाप्राप्तः खः स्यात्॥ सूत्रे 'पद'—ग्रहणात्, "विभाषा सुपः" इत्यनेन बहुच्प्रत्यये च पदत्वविरहात्, बहुकुलात् अपि यत्—ढकञ्—खाः प्रत्ययाः भवन्ति।

११६४॥ महाकुलात् अञ्-खञौ ।४।१।१४१॥

दी—। 'अन्यतरस्याम्' इत्यनुवर्तते। पक्षे खः। माहाकुलः माहाकुलीनः, महाकुलीनः।

Here also the word अन्यतरस्याम (optionally) comes down; alternatively ख also comes in after महाकुल। अञ् and खञ् being ञित्—affixes yield आदिवृद्धि in तद्धित। So माहाकुल, and माहाकुलीनः, alternatively महाकुलीनः as well.

मित—। 'अन्यतरस्याम्'—ग्रहणानुवृत्तेः, एकपक्षे अञ्खञौ भवतः, अन्यपक्षे खः अपि। अन्यथा सूत्रमिदम् अपवादभूतत्वात्; तदा अपवादेन मुक्ते उत्सर्गस्य अप्रवृत्तेः खप्रत्ययो न भवेत्।

११६५। दुष्कुलात् ढक् ।४।१।१४२॥

दी—। पूर्ववत् पक्षे खः। दौष्कुलेयः दुष्कुलीनः॥

The word दुष्कुल takes as before optionally ढक् (एय) and alternatively ख।

मित—। सुगमा॥

११६६। स्वसुश्छः॥

दी—। स्वस्रीयः।

The word स्वसृ takes छ (ईय) in the sense of अपत्य।

मित—। सुगमा।

११६७। भ्रातुर्व्यच्च ।४।१।१४४॥

दी—। चात् छः। अणोऽपवादः। भ्रातृव्यः— भ्रात्रीयः।

The word or the base भ्रातृ takes the affix व्यत् as well as छ in the sense of अपत्य। This rule bars अण् (due after भ्रातृ)।

मित—। सुगमा—।

११६८। व्यन् सपत्ने ।४।१।१५५।

दी—। भ्रातुर्व्यन् स्यादपत्ये, प्रकृतिप्रत्ययसमुदायेन शत्रौ वाच्ये। भ्रातृव्यः शत्रुः। "पाप्मना भ्रातृव्येण" इति तूपचारात्।

The base भ्रातृ takes the तद्धित affix व्यन् to denote अपत्य, provided also the whole original word along with the प्रत्यय denotes an enemy (शत्रु)। Thus भ्रातृव्यः शत्रुः (the son of a brother, who is an enemy). Then how do we get the use पाप्मना भ्रातृव्येण; for भ्रातृव्य itself denoting शत्रु, its qualifying epithet as पाप्मना becomes unnecessery. Hence Bhattoji says that this usage is due to attributing of हिंसकगुण on भ्रातृव्य by transference.

मित—। "अत्र भ्रातृशब्दार्थम् न विवक्षितः" किन्तु सपत्नार्थः। तत्र सपत्नार्थे एव भ्रातृव्यः। एवं चेत् "कथं पाप्मना भ्रातृव्येण' सिद्धः? उपमानात् सिद्धम् भ्रातृव्य इव भ्रातृव्य" इति भाष्यम्। तदेव प्रकारान्तरेण दीक्षितः कथयति—"उपचारात्" इति—"हिंसकत्वगुणयोगात् लाक्षणिकार्थात्"। "व्यत्", "व्यन्" इति प्रत्यययोः भिन्नत्वं च स्वरार्थं बोध्यम्॥

११६९। रेवत्यादिभ्यष्ठक् ।४।१।१४६॥

११७०। ठस्येकः ।७।३।५०॥

दी—। अङ्गात् परस्य ठस्य इकादेशः स्यात्। रैवतिकः।

Words of the रेवत्यादि class take ठक् (अपत्ये)। Now of ठक क् is इत् (i.e. it elides), and ठ is replaced by इक when it comes

after an अङ्ग, as फ is replaced by आयन्, ढ by एय, ख by ईन्, छ by ईय and घ by इय ( see "आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्" in स्त्री प्रत्यय )। Thus रेवती + ठक् ( इक )= रेवत् + इक ( by "यस्येति च" ) = रैवतिकः ( by आदिवृद्धि in तद्धित )।

मित—। अपत्यं ठक् इति सूत्रार्थः। ठकारस्य इक आदेशः स्यात् अङ्गात् परश्चेत्। "अङ्गात्" इति कथनात् 'कर्मठः' इत्यत्र ठकारस्य इकः न स्यात्, तत्र कर्मन् + अठच् इति प्रत्यये सति अठचः ठकारः अङ्गात्परो न भवति अकारेण व्यवधानात्। गणो यथा—रेवती, द्वारपाली—अश्वपाली वृकबन्धु—कर्णग्राह—प्रभृतयः।

**११७१। गोत्रस्त्रियाः कुत्सने ण च ॥४।१।१४७॥**

**टी—। गोत्रं या स्त्री तद्वाचकात् शब्दात् ण-ठकौ स्तः कुत्सायाम्। सामर्थ्यात् यूनि। गार्ग्या अपत्यं गार्गो गार्गिको वा जाल्मः। "भस्याढे तद्धिते" पुंवद्भावात् गार्ग्यशब्दात् ण-ठकौ। 'यस्येति—' लोपः। 'आपत्यस्य—' इति यलोपः।**

The fem. base ending in a गोत्रप्रत्यय, further takes the affixes ण and ठक् when a युवप्रत्यय ( अपत्यार्थे ) follows if censure ( कुत्सा ) is implied. As only one गोत्रप्रत्यय is added to a base by the rule "एकोगोत्रे", so a further अपत्यप्रत्यय after a गोत्रवाचक स्त्रीप्रत्ययान्त शब्द must naturally be is the sense of युवापत्य, hence Bhattoji here says "सामर्थ्यात् यूनि" i. e. गोत्रवाचक fem. bases take युवार्थे ण and ठक् if कुत्सा is denoted. Thus गर्गस्य गोत्रापत्यम् = गार्ग्य ( with यञ् ), then गार्ग्य + ङीप् = गार्ग्य् + ङीप् (by "यस्येति च" ) = गार्ग् + ङीप् (with यलोप by "हलस्तद्धितस्य") = गार्गी। This fem. base ending in a गोत्रप्रत्यय will take युवापत्यप्रत्यय, ण and ठक् by the present rule ; गार्ग्या युवापत्यम् इति गार्गी + ण or ठक = गार्ग्य + ण वा ठक् by पुंवद्भाव = गार्ग्य् + ण वा ठक् ( by "यस्येति च" ) = गार्ग् + ण वा ठक् ( with यलोप ) = गार्गः

वा गार्गिकः। To show censure here, Bhattoji in the example adds 'जाल्मः' (a rogue or villian or bastard). To show the above process here Bhattoji says "भस्य ढे तद्धिते" इति पुंवद्भावः ( of the base गार्गी here ); here पुंभाव of गार्गी will bring the original गोत्रप्रत्ययान्त base गार्ग्य here; then its अ will elide by the rule "यस्येति च", so Bhattoji adds—यस्येति लोपः। Then the final य् elides by the rule "आपत्यस्य च तद्धितेऽनाति" for it is अपत्यार्थक। So finally we get गार्ग् + ण वा ठक् = गार्गः वा गार्गिकः।

Though this very form is got without पुंवद्भाव even, still to show the real process ( वस्तुस्थिति ) here Bhattoji himself says all this.

सित—। 'ण' इति लुप्तप्रथमाकम्। चकारात् 'ठक्' आकृष्यते, तदाह—"गोत्रं या स्त्री तदन्तात् शब्दात् ण-ठकौ स्तः कुत्सायाम्"। गोत्रप्रत्ययान्तात् अपत्ये एतौ प्रत्ययौ स्तः, किन्तु "एको गोत्रे" इति सूत्रानुसारेण गोत्रे एक एव प्रत्ययो भवेत्, तदा इह का गतिः इत्याशङ्काह—'सामर्थ्यात्' नियमात् 'यूनि' ( गोत्रप्रत्ययान्तात् ) युवप्रत्यये सति एतत् सूत्रं प्रवर्त्तते। गार्ग्या अपत्यं युवा इति गार्गः ( ण प्रत्ययः ), गार्गिकः (ठप्रत्ययः)। "पितुरविज्ञाने मात्रा व्यपदेशः इति कुत्सनम्"—बालमनोरमा। अत्र प्रक्रियास्थितिः तु आङ्गलभाषायां दर्शिता; भट्टोजिना तदेव स्वयमुच्यते—पुंवद्भावात् 'गार्गी' शब्दात् णठकौ। ततः "यस्येति—" अकारलोपः। ततः "आपत्यस्य—" इति यकारलोपः॥

## ११७२। वृद्धाट्ठक् सौवीरेषु बहुलम् ॥४।१।१४८॥

**टी—। सुवीरदेशोद्भवाः सौवीराः। वृद्धात् सौवीरगोत्रात् यूनि बहुलं ठक् स्यात् कुत्सायाम्। भागवित्तिर्भागवित्तिकः। पक्षे फक् = भागवित्तायनः।**

When a युवप्रत्यय ( अपत्यार्थ ) follows a गोत्रप्रत्ययान्त word—it

denoting a सौवीर गोत्र—and having an initial वृद्धि vowel (which is thus a वृद्ध word by "वृद्धिर्यस्याचामादिस्तद् वृद्धम्"), then this word optionally takes ठक् to donote censure. Thus भागवित्ति (ending in गोत्रप्रत्यय इञ्)+ठक् (युवप्रत्यय)=भागवित्तिकः (when कुत्सा is denoted), optionally we get भागवित्तायन with फक् by the rule "यञिञोश्च"।

मित—। पूर्वसूत्रात् 'गोत्र' इति वर्त्तते। तत्र विशिष्यते, 'सौवीरगोत्रात्', 'वृद्धात्' च ("वृद्धिर्यस्याचामादिस्तद् वृद्धम्" इति सूत्रेण) वृद्धसंज्ञकात् सौवीरगोत्रात् इत्यर्थः। शेषं पूरयन् आह—युवार्थकप्रत्यये परं कुत्सायां च द्योत्ये पक्षे ठक् स्यात्। ठगभावे "यञिञोश्च" इति सूत्रेण फक् स्यात् तदाह "पक्षे फक्—भागवित्तायनः"।

११७३। फेश्छ च ॥ ४।१।१४९ ॥

**टी—। फिञन्तात् सौवीरगोत्रात् अपत्ये छः ठक् च कुत्सने गम्ये। यमुन्दस्यापत्यं यामुन्दायनिः। तिकादित्वात् फिञ्। तस्यापत्यं यामुन्दायनीयः—यामुन्दायनिकः। कुत्सने किम्? यामुन्दायनिः—औत्सर्गिकस्याणो 'ण्यक्षत्रिय…' इति लुक्। सौवीरेति किम्? तैकायनिः।**

When a युवापत्यप्रत्यय follows a word ending in the affix फिञ् and denoting a सौवीर गोत्र, then this word takes the affix छ and ठक् if censure is implied. यमुन्दस्य अपत्यं gives यामुन्दायनि with फिञ् by the rule "तिकादिभ्यः फिञ्"। Now this फिञन्त word denotes a सौवीर गोत्र, and when again a युवप्रत्यय is to follow (with कुत्सा) then it is छ and ठक्। Thus यामुन्दायनि+छ=यामुन्दायनीयः, with ठक् it is यामुन्दायनिकः। Why do we say "कुत्सने"? Witness यामुन्दायनिः—with अण् by the

general rule ( उत्सर्ग ) "तमगापताम्" ; and this अण् eliding by the rule "ण्यक्षत्रियार्षञितो यूनि लुगणिञोः", because here no censure is implied. Bhattoji says all this by "कुत्सने किम् ? —यामुन्दायनिः—औत्सर्गिकस्य अणः 'ण्य क्षत्रिय—' इति लुक्"। Why again do we say "सौवीरगोत्र" here ? Witness तैकायनिः—it does not denote a सौवीर गोत्र, so ठ and छ do not come, but the general अण् comes in and at the same time it elides by "ण्यक्षत्रिय—" as before yielding तैकायनि without छ or ठक् by the present rule.

वृत्त—। 'छ' इति लुप्तप्रथमाकम्, यथा 'ण' इत्यत्र। चकारात् 'ठक्' आकृष्यते। "सौवीर गोत्रे, कुत्सने" इति प्रवर्त्तनादनुवर्त्तते, तदाह—"फिञन्तात् सौवीरगोत्रात् छः ठक् च कुत्सने"॥ अन्यत् मूले स्पष्टम्॥

१९७४। फाण्टाहृतिमिमताभ्यां णफिञौ॥ ४।१।१५०॥

दी—। सौवीरेषु। "नेह यथासंख्यम्', 'अल्पाच्तरस्य परनिपातात् लिङ्गात्' इतिवृत्तिकारः। भाष्ये तु "यथासंख्यमेव" इति स्थितम्। फाण्टाहृतः—फाण्टाहृतायनिः। मैमतः—मैमतायनिः।

The word फाण्टाहृति in the sense of सौवीरगोत्र takes ण and फिञ् when a युवप्रत्यय follows. "कुत्सने" does not come in here ; ण and फिञ् attach to both the words and these do not attach respectively to the two words ; for in that case that which has fewer vowels should have been placed first, whereas here 'मिमत' having fewer vowel is placed later. From this vrittikara ( Kasika ) infers thus. But Bhashya has—यथासंख्यम्। Bhattoji follows both and says फाण्टाहृत (with ण) and फाण्टाहृतायनिः ( with फिञ् )। Thus फाण्टाहृतस्य गोत्रापत्यं' gives

फाण्टाहृति with इञ् by the rule "अत इञ्"। Then फाण्टाहृतेः अपत्यं युवा इति फाण्टाहृति + ण = फाण्टाहृताः, and फाण्टाहृति + फिञ् = फाण्टाहृतायनिः।

मित—। अत "कृतमन्ते" इति निवृत्तम्॥ "मैमत इति—मिमतस्यापत्यमिति विग्रहः। मिमतशब्दे सौवीरगोत्रादिति न सम्बधाते। व्याख्यानात् गोत्वाभावात्" —( बालमनोरमा )।

११७५। कुर्वादिभ्यो ण्यः॥ ४।१।१५१॥

टी—। अपत्ये। कौरव्याः ब्राह्मणाः। वावदूक्याः। "सम्राजः क्षत्रिये" ( गणसूत्रम् )—साम्राज्यः। साम्राजोऽन्यः॥

Words of the Kuru-class ( here Kuru denoting name of Bramahana only ) take the affix ण्य in the sense of अपत्य।

Thus we got कुरु + ण्य (अपत्यं) = कौरव्य with आदिवृद्धि and गुण (by "ओर्गुणः"); then in बहुवचन we got कौरव्याः ब्राह्मणाः। The instance in बहुवचन with ब्राह्मणाः as विशेष्य is to show its difference from the application of the rule "कुरुनादिभ्यो ण्यः" to be enumerated later here—this later rule gives ण्य after कुरु etc. if these denote both a क्षत्रियजाति and जनपद as well; and then the affix elides in the plural by "तद्राजस्य बहुषु तेनैवास्त्रियाम्।" But all these are ineffective in the present rule—for here कुरु denotes Brahmanas only and not "क्षत्रिय and जनपद" as well. Thus Kasika here says "कुरुशब्दात् अपरो ण्यप्रत्ययो भविष्यति स तु क्षत्रियात् तद्राजसंज्ञकः तस्य बहुषु लुका भवितव्यम् अयं तु श्रूयते एव"।

The ganasutra here says that सम्राज् takes ण्य in the sense of क्षत्रिय only.

मित—। 'सौवीरेषु' इति 'बहुत्वम्' इति चात्र नर्व' निवृत्तम्, शेषं पूरयन्नाह—'अपत्यं'। "कुरुर्नाम कश्चित् ब्राह्मणः तस्य अपत्यानि इति कौरव्याः। ण्यप्रत्यये, ओर्गुणे, अवादेशः, आदिवृद्धिश्च"—इति कुरु + ण्य = कौरव्याः। "यस्तु 'कुरुनादिभ्यो ण्यः' इति ण्यः—वक्ष्यते, तस्य तद्राजत्वात् बहुषु लुकि कुरवः क्षत्रियाः इति भवति। एतत् सूचनार्थमेव बहुवचनं, ब्राह्मणा इति विशेष्यस्योदाहृतम्" ( बालमनोरमा )। वावदूकस्य अपत्यानि इति वावदूक + ण्य = वावदूक्याः। साम्राज्योऽन्यः—क्षत्रियादन्यः शूद्रादौ उत्पन्न इत्यर्थः। कुरु—कौरव्य-शब्दयोः क्षत्रियवचनयोः तिकादिषु पाठात् फिञपि भवति इति बोध्यम्।

कुर्वादिर्यथा—कुरु, गर्ग, मङ्गुष, अजमार, रथकार, वावदूक, 'सम्राजः क्षत्रिये', कवि, मति, काविञ्जलादि, वाक्, वामरथ, पितृमत्, इन्द्रजालि, एजि, वातकि, दामोष्णीषि, गणकारि, कैशोरि, कुट, शलाका, मुर, पुर, एतका, शुभ्र, अभ्र, दर्भ, केशिनी, वेना छन्दसि ("कथं भाषायां वैन्यो राजेति ? छान्दस एवायं कविभिः प्रमादात् प्रयुक्तः" ), शूर्पनाय, श्यावनाय, श्यावरथ, श्यावपुत्र, सत्यङ्कार, वडभीकार, पथिकार, मूढ, शकन्धु, शङ्कु, शाक, शाकिन्, शालीन, कर्तृ, हर्तृ, इन, पिण्डी, तक्षन्, वामरथस्य कण्वादिवत् स्वरवर्जम्।

## ११७६। सेनान्त-लक्षण-कारिभ्यश्च ॥ ४।१।१५२॥

**टी—। एभ्यो ण्यः (अपत्ये ?)। 'एति संज्ञायाम्—' इति सस्य षः। हारिषेण्यः। लाक्षण्यः। कारिः शिल्पी, तस्मात्। तान्तुवाय्यः। कौम्भकार्य्यः। नापित्यः।**

words ending in सेना ( वा—सेन ), the word लक्षण, and words that denote some 'artisan' take the affix ण्य in the sense of अपत्य। Thus here Kasika says "कारिशब्दः कारूणां तन्तुवायादीनां वाचकः", and here Bhattoji also has "कारिः शिल्पी तस्मात्"। Then हरिषेण + ण्य = हारिषेण्य। In हरिषेण we have cerebral by the rule

"इति संज्ञायामगात्" (see सर्वसिद्धान्तरत्नप)। Similarly लाक्षव्य, तान्तुवाय्य etc.

मित—। सूत्रार्थस्तिथा—सेनान्तात् प्रातिपदिकात्, लक्षणशब्दात् कारिवाचकेभ्यः च अपत्ये ण्य-प्रत्ययो भवति। कारि-शब्दस्यार्थमाह—"कारिः शिल्पी, तस्मात्"। अन्यत् सर्वं स्पष्टम्।

११७७। उदीचामिञ् ॥ ४।१।१५३ ॥

**दी—। हारिषेणिः। लाक्षणिः। तान्तुवायिः। कौम्भकारिः। नापितात्तु परत्वात् फिञेव। नापितायनिः। "तक्ष्णोऽण उपसंख्यानम्"। "षपूर्व—" इत्यनोऽकारलोपः। ताक्ष्णः। पक्षे—ताक्ष्ण्यः।**

This rule states इञ् (optionally) according to northern professors in cases of the conditions of the prior rule "सेनान्तलक्षणकारिभ्यश्च"। Thus we also get हारिषेणिः &c with इञ्। The word नापित however having an initial वृद्ध vowel (i.e, आ) takes फिञ् (आयनि) by the later rule "उदीचां वृद्धादगोत्रात्" yielding नापितायनि (optionally). The base तक्षन् is read in the शिवादि list, so it takes अपत्ये अण् and it being counted here ण्य as well comes after it by the prior rule. Then तक्षन् + अण् = ताक्ष्णः (with अकार- लोप by the rule "षपूर्वहन्धृतराज्ञामणि"), with ण्य the form is ताक्ष्ण्यः।

मित—। सुगमा॥ ण्ये प्राप्ते अनेन उदीचांमतेन इञ् विधीयते। तक्षन्-शब्दः शिवादिः, तेन अयमिञ् बाध्यते, किन्तु वार्त्तिकेन कारिलक्षणो ण्य-प्रत्ययः स्यादेव। अपि तु प्रकृतिभावस्ततो "षपूर्व—" इति सर्वेण अकारलोपे ताक्ष्णः इति स्यात्। पक्षे तु ताक्ष्ण्यः। "ये चाभावकर्मणोः" इति प्रकृतिभावान्न टिलोपः।

११७८ । तिकादिभ्यः फिञ् ।४।१।१५४ ॥

टी — । तैकायनिः ।

Words of the तिकादि class take फिञ् in the sense of अपत्य । This bars इञ् that would otherwise have come to them.

बि॰—। तिकादिर्यथा—तिक, कितव, संज्ञा, बाल, शिखा, उरस्, शाठ्य, सैन्धव, यमुन्द, रूप्य, ग्राम्य, नील, अमित्र, गौकक्ष, कुरु, देवरथ, तैतिल, औरस, कौरव्य, भौरिकि, भौलिकि, चौपत, चैटयत, शीकवत, क्षैतयत, ध्वाजवत्, चन्द्रमस्, शुभ, गङ्गा, वरेण्य, सुयामन्, आरद्ध, वाह्यक, खल्य, वृष, लोमक, उदन्य, यज्ञ ।

अत्र यः कौसल्यशब्दः पठ्यते स च बहिर्भवत्य तिकादिपाठात् अस्मात फिञ् भवति ।

११७९ । कौशल्यकार्मार्य्याभ्यां च ॥ ४।१।१५५ ॥

टी — । अपत्ये फिञ् । इञोऽपवादः । परमप्रकृतेरेवायम् इष्यते ॥ प्रत्ययसन्नियोगेन प्रकृतिरूपं निपात्यते । कौसलस्यापत्यं कौसल्यायनिः । कर्मारस्यापत्यं कार्मार्य्यायणिः । छागवृषयोरपि ॥ छाग्यायनिः । वार्षायणिः ।

The words कौसल्य (कौशल्य) and कार्मार्य्य take फिञ् in the sense of अपत्य । This thus bars इञ् due after these by—अत इञ् or बाह्वादि इञ् । This फिञ् is intended to be added to the base कौसल &c turned to कौसल्य &c. by addition of युट् ( as declared in the Bhashya ). Hence कौसल्य &c. are readin the sutra, so that फिञ् is to come to the orginal word ( परमप्रकृति ) कौसल &c, turned irregularly as कौसल्य &c. with the addition of the affix युट् ( प्रत्ययसन्नियोगेन ) । Thus कौसल्यापत्यम् -- कौसल्य (with युट )+ फिञ् = कौसल्यायनि । Similarly कार्मार्य्यायणि from कर्मार ( irregularly turned to कार्मार्य्य by adding युट् ) । The varttika ( छाग &c )—

says that this फिञ् is to come here after युट् has been added to these also.

मित—। अपत्ये फिञ् विहितः स च 'पत्रमप्रकृतेः' कुलशब्दात् कुलशब्दस्य कौसल-कार्मार-शब्दस्य एव इष्यते। स च कुलशब्दः फिञि सति सर्वत्र युट्प्रत्ययसन्नियोगेन सन्नियोग कौसल्य-कार्मार्य्ययोः निपातनात् प्रतिपद्यते इति भाष्ये स्थितम्। एवं कोसलस्यापत्यम् इति कोसल + फिञ् = कौसल्य + फिञ् = कौशल्यायनिः। एवं कर्मारस्यापत्यम् कार्मार्य्यायणिः। छागवृषयोरपि फिञि सति युट् च वक्तव्यम् इति वार्तिकार्थः —तेन छागायनिः, वार्ष्यायणिः।

११८०। अणो द्व्यचः। ४।१।१५६॥

टी—। अपत्ये फिञ्। इञोऽपवादः। कार्त्रायणिः। 'अणः' इति किम्? दाक्षायणः। द्व्यचः किम्? औपगविः। "त्यदादीनां फिञ् वा" (वार्तिक)। तयादायनिः; त्याद्ः।

The affix फिञ् is attached in the sense of अपत्य after a word ending in the affix अण् and having two vowels (द्वि अच्)। This bars इञ् due by "अत इञ्" &c। Thus कर्तृः कार्त्रः इति कर्तृ + अण् = कार्त्रम् ("तस्येदम्" इत्यण्)। Then this अणन्त word कार्त्र takes फिञ् in the sense of अपत्य as कार्त्र + आयनि = कार्त्रायणिः। why do we say 'अणः' (ending in the affix अण्) here? witness दाक्षायणः (from दाक्षि + फक् by the rule "यञिञोश्च")—दाक्षि not ending in अण्, फिञ् (आयनि) does not come after it by the present rule; why do we say द्व्यचः (having two vowels) in the sutra? witness औपगविः (from औपगव + इञ् = औपगवि) with इञ; for though औपगव ends in अण्, still it having more then two vowels do not take फिञ्। Words of the त्यदादि class (as enumerated under the सर्वादि list of सर्वनाम words) take optionally फिञ् in

the sense of अपत्य। Thus त्यादायनिः and त्यादः। so also यादायनिः and यादः ( from यद् ) & so on. Here अण् comes by the genaral rule "तस्यापत्यम्"।

मित—। अणन्तात् द्व्यचः प्रातिपदिकात् अपत्ये फिञ् प्रत्ययो भवति। सूत्र-मिदम् "अतइञ्" इत्यस्यापवादः, अत आह—"इञोऽपवादः"। कर्त्तुः छात्र इति कर्त्तृ + अण् ( "तस्येदम्" इत्यण् ) = कार्त्रः। तस्यापत्यम् इति कार्त्र + फिञ् = कार्त्रायणिः॥ 'अणः' इति उक्तत्वात् दाक्षेः अपत्यम् युवा इति दाक्षायणः ("यञिञोश्च" इति फक्)—अदन्तत्वाभावात् फिञ् न स्यात्॥ 'द्व्यचः' इति उक्तत्वात् बह्वचोऽपि अणन्तात् औपगव-शब्दात् फिञ् न स्यात् किन्तु इञेव॥ त्यद तद, यद् प्रभृतीनाम् विकल्पेन फिञ् स्यात्, पक्षे औत्सर्गिकः अणेव भवति। वार्त्तिककारैः हरिकारिकानु-रोधेन इहोपन्यस्तम्। भाष्ये च एतन्नास्ति। "त्यदादीनि च" इति त्यदादीनां वृद्ध-संज्ञा हेतोः "उदीचां वृद्धादगोत्रात्" इत्येव फिञः प्रकृतत्वात्; पक्षान्तरे अणपि।

### ११८१। उदीचां वृद्धादगोत्रात्॥ ४।१।१५७॥

**टी—। आम्रगुप्तायनिः। प्राचां तु—आम्रगुप्तिः। वृद्धात् किम्? दाक्षिः। 'अगोत्रात्' किम्? औपगविः।**

According to northern professors, the वृद्ध words (i.e, words having an initial वृद्धि vowel ) that do not signify any "गोत्र", take the affix फिञ् optionally after them in the sense of अपत्य। Thus आम्रगुप्तायनि ( with फिञ् ), but आम्रगुप्ति ( with इञ् acc. to eastern or old opinion ). By this rule we get नापितायनि ( as hinted before ). Why do we say 'वृद्धात्' here? witness दाक्षि with इञ्, for दक्ष has no initial वृद्धि vowel in it. Why again we have अगोत्रात् here? Witness औपगवि ( with इञ् )—औपगव denoting a गोत्र, its युवापत्य is expressed by the affix इञ and not फिञ् ( as enjoined in this rule ).

मित—। वृद्धं यच्छब्दस्वरूपम् अगोत्रं तस्मात् अपत्ये फिञ् स्यात् उदीचाम् आचार्य्याणां मतेन ॥ सूत्रे 'वृद्धात्' इति कथनात् दक्षस्यापत्यम् इति दाक्षिः ( इञ् ), न तु फिञ् ॥ 'अगोत्रात्' इति कथनात् औपगवशब्दस्य युवापत्ये च गोत्रत्वात् इञेव स्यात्, न तु फिञ् ॥ इदमप्यत्र अवधेयम्—कारिशब्दादपि वृद्धात् अगोत्रात् परत्वात् अनेनैव फिञ् स्यात्—नापितायनिः ॥

## ११८२। वाकिनादीनां कुक् च ॥ ४।१।१५८ ॥

दी—। अपत्ये फिञ् वा। वाकिनस्यापत्यं वाकिनकायनिः; वाकिनिः।

Words of the वाकिन—group optionally take the affix फिञ् in the sense of अपत्य, and when फिञ् comes in, the augment कुक् is also ordered therein ( cp "फिञ् प्रत्ययो भवति तत्सन्नियोगेन एषां कुगागमः"—*Kasika*)—witness वाकिनकायनिः। Otherwise अदन्तलक्षण इञ् comes in yielding वाकिनिः।

मित—। वाकिनादिर्यथा—वाकिन, गौधेर, कर्कश, काक, लङ्का, चर्मिवर्मिणो-र्नलोपश्च ॥ सूत्रे चकारात्—'उदीचाम्' इति 'फिञ्' इति च वर्त्तते, तदाह "अपत्ये फिञ् वा"। फिञि सति तत्सन्नियोगेनैव एषां 'कुक्' आगमश्च भवति। पक्षे इञ्। कुगागमस्य कित्वात् अन्त्यादेशः वाकिन + आयनि = वाकिनकायनिः। पक्षे इञि सति वाकिनिः।

## ११८३। पुत्रान्तादन्यतरस्याम्। ४।१।१५९ ॥

दी—। अस्मात् वा फिञ् सिद्धः, तस्मिन् परे पुत्रान्तस्य वा कुक् विधीयते। गार्गीपुत्रकायणिः-गार्गीपुत्रायणिः-गार्गीपुत्रिः।

Words ending in पुत्र and having an initial वृद्धि vowel optionally takes फिञ् and when again फिञ् is attached the augment कुक् optionally comes in, yielding—गार्गीपुत्रकायणिः ( with फिञ् and कुक्), गार्गीपुत्रायणिः ( with फिञ् but no कुक्),

and गार्गीपुत्रि ( without फिञ् and कुक्, but with इञ् as in the case of वाकिनि )।

मित—। 'उदीचाम्' इति, 'वृद्धात्' इति च वर्त्तते। पुवान्तम् अगोत्रम् इति पूर्वसूत्रेण ( "उदीचां वृद्धादगोत्रात्" इत्यनेन ) सिद्धे सति अनेन विकल्पेन कुगागमो विधीयते। पुवान्तात् प्रातिपदिकात् यः फिञ् स्यात् तस्मिन् परे सति कुगागमो वा भवति पुवान्तस्य वृद्धशब्दस्य। एवं विरूपं दृश्यते गार्गीपुत्रकायणिः इत्यादि मूले यथा।

## ११८४। प्राचामवृद्धात् फिन् बहुलम्। ४।१।१६०॥

## दी—। ग्लुचुकायनिः।

According to Eastern (or old ?) professors, the affix फिञ् is attached to words which are not technically called वृद्ध words—in the sense of अपत्य। Thus ग्लुचुकस्यापत्यम् = ग्लुचुक + आयनि = ग्लुचुकायनि ( without आदिवृद्धि, for फिन् is not ञ—इत् or ण—इत् or क—इत् )।

मित—। अवृद्धशब्दात् अपत्ये बहुलं फिन्—प्रत्ययो भवति 'बहुलग्रहणात्' विकल्पेन भवति इति ज्ञेयम्; तेन 'ग्लौचुकिः' इत्यपि इञा सिध्यति। "'प्राचाम्', 'अन्यतरस्याम्', 'बहुलम्'—इति सर्व एते विकल्पार्थकाः एतेषामेकेनैव विकल्पे सिद्धे इह प्राचाम् ग्रहणम् पूजार्थम्"—इति काशिका। बहुलग्रहणं वैचित्र्यार्थम् च —क्वचिन्नैव भवति; दाक्षिः, प्लाक्षिः। 'अवृद्धात्' कथमुक्तम्? 'राजदन्तिः' इति वृद्धात् फिन न स्यात्।

## ११८५। मनोर्जातावञ्यतौ षुक् च। ४।१।१६१॥

## दी—। समुदायार्थो जातिः। मानुषः, मनुष्यः।

The word मनु takes the affixes अञ् and यत् in the sense of जाति, then when these affixes follow the augment षुक् comes in, yielding both मानुष ( with अञ् + षुक् ) and मनुष्य ( with यत् and षुक )। As the whole resultant word denotes जाति, so Bhattoji says "समुदायार्थो जातिः"।

मित—। मनुशब्दात् अञ् यत् इत्येतौ प्रत्ययौ भवतः, तत्सन्नियोगेन षुगागमश्च। प्रकृतिप्रत्ययसमुदायेन चेत् जातिर्गम्यते। मनोरपत्यं जातिः इति मनु+अञ्=मनुष्+अञ्=मानुषः। एवं मनु+यत्=मनुष्+यत्=मनुष्यः। अत्र केवलापत्यार्थः नास्त्येव। अतः 'मानुषा' इत्यत्र बहुत्वे "यञञोश्च" इति लुक् न स्यात्। अपत्यविवक्षायाम् तु अणेव भवितव्यम्—मानवी प्रजा। तथा च—"अपत्ये कुत्सिते मूढे मनोरौत्सर्गिकः स्मृतः। नकारस्य च मूर्द्धन्यस्तेन सिध्यति माणवः" ॥

**११८५। जनपदशब्दात् क्षत्रियादञ्। ४।१।१६८ ॥**

**टी—। जनपदक्षत्रिययोर्वाचकात् अञ् स्यादपत्ये। "दाण्डिनायन—" इति सूत्रे निपातनात् टिलोपः। ऐक्ष्वाकः। ऐक्ष्वाकौ। "क्षत्रियसमानशब्दात् जनपदात् तस्य राजन्यपत्यवत्"—(वार्तिक); तद्राजम् आचक्षाणस्तद्राज इत्यन्वर्थसंज्ञासामर्थ्यात्। पञ्चालानां राजा पाञ्चालः। "पूरोरण् वक्तव्यः"—(वार्तिक); पौरवः। "पाण्डोर्ड्यण्"—पाण्ड्यः।**

The affix अञ् comes in the sense of अपत्य after a word that denotes both a country and a Kshattriya (race). Thus इक्ष्वाकु denoting both a country and a Kshattriya king is to take अञ् by this rule. इक्ष्वाकुर्नाम देशः, क्षत्रियः राजा च। तस्य राजा or अपत्यम्=इक्ष्वाकु+अञ्=ऐक्ष्वाकः, irregularly formed with टिलोप by the rule "दाण्डिनायन—" (rule 1145 ante). [N. B.—Thus अञ् etc. denoting both राजा and अपत्य are called तद्राज affix and these elide in the plural as will be seen later, so Bhattoji here says "ऐक्ष्वाकः—ऐक्ष्वाकौ", and will later under the rule "तद्राजस्य बहुषु तेनैवास्त्रियाम्", say इक्ष्वाकवः (in the plural)]. The Varttika here says that after a word denoting जनपद (country) and which is equally applied to a क्षत्रिय take

राजा। Thus we get औदुम्बरिः, प्रात्यग्रथिः, कालकूटिः, आश्मकि &c. This rule bars the usual अञ् here.

मित—। जनपदक्षत्रियोभयवाचकात् इति वर्त्तते एव। साल्वा नाम क्षत्रियाः। तस्य अपत्यम इति साल्व + ढक् ( द्व्यचः इति ढक् ) = साल्वेयः। औत्सर्गिकः अणपि इष्यते, तेन साल्वः। तदवयवा उदुम्बरादयः ( तदयथा— "उदुम्बरास्तिलखला मद्रकारा युगन्धराः। भुलिङ्गा शरदन्ताश्च साल्वावयवसंज्ञिताः॥"— केषाञ्चिन्मते आजमीढ अजक्रन्द अपि ), तेभ्यः क्षत्रियप्रवृत्तिभ्यः, प्रत्यग्रथादिभ्यः त्रिभ्यः इञ प्रत्ययविधानं राजनि अपत्ये च। अन्यत् स्पष्टं मूलं॥

११९२। ते तद्राजाः॥ ४।१।१७४॥

दी—। अञादय एतत्संज्ञाः स्युः।

११९३। तद्राजस्य बहुषु तेनैवास्त्रियाम्। २।४।६२॥

दी—। बहुष्वर्थेषु तद्राजस्य लुक् स्यात् तदर्थकृते बहुत्वे न तु स्त्रियाम्। इक्ष्वाकवः। पञ्चालाः इत्यादि॥ कथं तर्हि— 'कौरव्याः पशवः,' 'तस्यामेव रघोः पाण्ड्याः' इति च ? कौरव्ये पाण्ड्ये च साधव इति समाधेयम्॥ 'रघूणामन्वयं वक्ष्ये', 'निरुध्यमाना यदुभिः कथञ्चित्' इति तु रघुयदुशब्दयोः तदपत्ये लक्षणया।

The affixes अञ् etc that are here enjoined after जनपदक्षत्रिय-वाचकशब्द in the sense of अपत्य and राजा ( e. g. "जनपदशब्दात् क्षत्रियादञ्" &c ) are called तद्राज affixes. And these तद्राज affixes elide if plurality due to these affixes is intended and there is no reference to femenine gender. Thus we get इक्ष्वाकवः, पञ्चालाः &c with elision of अञ् in the

plural. If this be the case then how do we get "कौरव्याः पशवः", "पाण्ड्याः" &c. in the plural with तद्राज affixes not elided? The answer is that in such cases we are to add यत् after the base कौरव्य and पाण्ड्य ( singular ) by the rule "तत्र साधुः"। Now this new word (कौरव्य + यत् =) कौरव्य being no longer ending in a तद्राज affix, this will not elide in the plural. Again रघु, यदु though refers to kshatriyas yet they are not जनपदवाची and as such they cannot take तद्राज affix, how then are these used in the plural but without any तद्धितप्रत्यय with reference to descendants of रघु and यदु? To this Bhattoji answers by saying that no प्रत्यय is used after these, but by transference (लक्षणा), they refer to the progeny of रघु and यदु।

मित—। "जनपदशब्दात् क्षत्रियादञ्" इत्येवमादयः प्रत्ययाः सर्वनाम्ना ( 'ते'—इत्यनेन ) परामृश्यन्ते ; न तु तत्पूर्वा अपि। अत आह—"अञादय एतत्संज्ञाः स्युः"। एवं तद्राजप्रत्ययार्थकृतबहुत्वे द्योत्ये तद्राजप्रत्ययस्य लुक् स्यात्, न तु स्त्रियाम्। ततः (बहुषु) इक्ष्वाकवः, पञ्चालाः (प्रत्ययविरहिताः सन्तः) सिध्यन्ति॥ "कौरव्याः पशवः", "पाण्ड्याः"—इत्यत्र तद्राज—ण्य-प्रत्ययः, ड्यण्—प्रत्ययश्च अस्ति, तत् कथं एषां बहुत्वे प्रत्ययलोपविरहः? इत्याशङ्क्याह—कौरव्यशब्दात् पाण्ड्यशब्दाच्च पुनः "तत्र साधुः" इति सूत्रेण यत्—प्रत्ययं कृत्वा कौरव्यशब्दः पाण्ड्यशब्दः सिध्यति। अनयोः बहुत्वे यत्-प्रत्ययस्य तद्राजत्वाभावात् लोपो न ; अत आह—"कौरव्ये पाण्ड्ये च साधव इति समाधेयम्"॥ "ननु—रघु यदुशब्दयोः जनपदवाचित्वाभावात् प्राग्दीव्यतीये अणि तस्य तद्राजत्वाभावात् कथं बहुषु 'रघूणामन्वयं वक्ष्ये'—इत्येवमादिषु तस्य लुक् स्यात्? इत्याशङ्क्याह—रघु—यदुशब्दौ लक्षणया तदपत्ये वर्त्तेते, न तु प्रत्ययः क्रियते। एतदभिप्रेत्य भट्टोजिराह—"रघुयदुशब्दयो स्तदपत्ये लक्षणया"।

११९४। कम्बोजाल्लुक् ।४।१।१७५॥

दी—। अस्मात् तद्राजस्य लुक्। कम्बोजः—कम्बोजौ। "कम्बोजादिभ्य इति वक्तव्यम्" (वा—)। चोलः, शकः—द्व्यज्लक्षणस्य अणो लुक्। केरलः, यवनः—अञो लुक्। 'काम्बोजाः समरे' इति पाठः सुगमः। दीर्घपाठे तु—कम्बोजोऽभिजनो येषाम् इत्यर्थः। "सिन्धुतक्षशिलादिभ्योऽणञौ" (सूत्र १४७२)—इत्यण्।

The तद्राज affix elides after the word कम्बोज (even though plurality due to तद्राजप्रत्यय is not intended). Thus we get कम्बोजः—कम्बोजौ &c—with elision of तद्राजप्रत्यय even in singular & dual,—(hence instances of singular and dual only are given by Bhattoji).

Now the varttika says that this elision is after words of the कम्बोज class i.e., after कम्बोज, चोल, शक, केरल, यवन। Thus we get चोलः, शकः with elision of तद्राज अण् due by "द्व्यञ्मगध—" in singular &c. And केरलः यवनः with elision of तद्राज अञ् &c. Sometimes we find intances like "काम्बोजाः समरे" &c; but Bhattoji says that here the reading "कम्बोजाः समरे" is rather admissible and easily intelligible. If we are at all to support the दीर्घपाठ as काम्बोज, then let us proceed thus—कम्बोजः (देशः) अभिजनः (पूर्वनिवासः) येषाम् इति कम्बोज+अण्=काम्बोजाः। Here the affix अण् is not तद्राज but is guided by the rule "सिन्धुतक्षशिलादिभ्यः अणञौ"। So this अतद्राज affix will not at all elide and we will get काम्बोजाः &c.

सित—। जनपदशब्दात् क्षत्रियात् इति विहितस्य अञो लुक्। अबहुत्वार्थमेव सूत्रम्, अत उदाहरति "कम्बोजः, कम्बोजौ"। अधुना वार्तिकमाह—"कम्बोजादिभ्य

लुग्वचनं चोलाद्यर्थम्"। सर्वमेतत् मूले स्पष्टम्॥ कथं काम्बोजाः इति दीर्घपाठः दृश्यते, अनेन तद्राजप्रत्ययस्य लुक्प्रसङ्गात्? इत्यत्राह—"कम्बोजाः समरे' इति ह्रस्वपाठ एव सुगमः"। दीर्घपाठे तु 'सोऽस्य अभिजनः' इत्येवमर्थे—"सिन्धु तक्षशिला-दिभ्योऽणञौ" इति अण्प्रत्ययेन साधनीयः, ततः अस्य तद्राजत्वाभावात् वर्त्तमानसूत्रेण लुक् न स्यात्, "काम्बोजाः" इति च सिध्येत्।

### ११८५॥ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च। ४।१।१७६॥

**दी—। तद्राजस्य लुक् स्यात्। अवन्ती, कुन्ती, कुरू।**

The तद्राज affix will elide in the feminine gender after these words—अवन्ति, कुन्ति, कुरु। अवन्तेः कुन्तेः अपत्यं स्त्री राजा वा इति इतृलक्षणस्य ञ्यङ्-प्रत्ययस्य लुकि सति "इतो मनुष्यजातेः "इति ङीष्। कुरुः इत्यत्र ण्यप्रत्ययस्य लुक्, ततः स्त्रियामूङ्।

### ११८६। अतश्च।४।१।१७७॥

**दी—। तद्राजस्य अकारस्य स्त्रियां लुक् स्यात्। शूरसेनी। मद्री। कथं 'माद्रीसुतौ' इति?—'ह्रस्व एव पाठ' इति हरदत्तः। भर्गादित्वं वा कल्प्यम्।**

The अकार of a तद्राज affix elides in the feminine. Thus शूरसेनस्य अपत्यं स्त्री = शूरसेन + अञ् ( अकार of तद्राजप्रत्यय) = शौरसेन + ङीष् ( अपत्यप्रत्ययेनजातित्वात् ) = शूरसेनी (अकारप्रत्ययस्य लुक्)। एवं मद्री। How then do we get माद्रीसुतौ with दीर्घ in माद्री? Haradatta says—That the reading should be मद्री with (ह्रस्व-अकार); or we may defend माद्री without elision of तद्राजप्रत्यय in fem. by including it under the भर्गादि list (after which तद्राज affix do not elide—see the next rule ).

मित—। सुगमा॥

११८७। न प्राच्य-भर्गादि-यौधेयादिभ्यः। ४।१।१७८॥

दी—। एभ्यस्तद्राजस्य न लुक्। पाञ्चाली, वैदर्भी, आङ्गी वाङ्गी, मागधी—एते प्राच्याः। भार्गी, कारूशी कैकेयी। 'केकयी' इत्यत्र जन्यजनकभावलक्षणे पुंयोगे ङीष्। 'युधा', 'शुक्रा'—आभ्यां 'द्व्यचः' इति ढक्; ततः स्वार्थे 'पर्श्वादि यौधेयादिभ्योऽणञौ' इत्यञ्। 'शार्ङ्गरवाद्यञः—' इति ङीन्। 'अतश्च' इति लुकि तु ढगन्तत्वात् ङीपि उदात्तनिवृत्तिस्वरः स्यात्। यौधेयी, शौक्रेयी।

The तद्राज affix do not in the fem. elide after जनपदक्षत्रियवाचक words denoting प्राच्यक्षत्रिय or after words of the भर्गादि group or after words of the यौधेयादि class. Thus पाञ्चाली (प्राच्यक्षत्रिय), भार्गी कैकेयी (भर्गादि group) etc. In the case of केकयी however there is पुंयोगे ङीष् after the base केकय denoting जन्यजनक relation (cp. "केकयीतः प्राक् भरतस्ततोऽभूत्", "केकय्यपत्यं बत वह्नन्यम्"—Bhatti). यौधेयी, शौक्रेयी are got even without this rule, as युधा + ढक् = यौधेय, यौधेय + अञ् (स्वार्थे) = यौधेय, (see Text); now though this स्वार्थिक अञ् [which is also तद्राज affix by the rule "ञ्याद्यस्तद्राजाः(५।३।११९)] elides by "अतश्च,', still then ङीप् by "टिड्ढाणञ—"will operate, for यौधेय ends in ढक् yielding the desired result यौधेयी; but then its स्वर will be उदात्त at the end; whereas if we establish यौधेयी in the way described in the Text i.e. with शार्ङ्गरवादि ङीन्, then its स्वर will be आद्युदात्त। And for this difference it is separately mentioned in this sutra.

मित—। प्राच्येभ्यः, भर्गादिभ्यः (भर्ग, करूश, केकय, कश्मीर, साल्व, सुस्थाल, उरस्, कौरव्य), यौधेयादिभ्यः (यौधेय, शौक्रेय, शौभ्रेय, ज्यावाणेय, धौर्त्तेय, धार्त्तेय,

त्रिगर्त्त, भरत, उशीनर )—उत्पन्नस्य तद्राजस्य स्त्रियां लुक् न स्यात् ॥ यौधेयादिभ्यः स्त्रियां लुक्प्रतिषेधं दर्शयितुमाह—युधा, शुक्रा आभ्यां 'द्व्यचः' इति ढक् इत्यादि। यद्यपि अत्र सूत्रे अनुक्तत्वादपि (युधा+ढक्=यौधेय ; ततः स्वार्थिक अञ् ; तस्य तद्राजत्वात् "अतश्च" इति लुक्, ततः) ढकप्रत्ययान्तत्वात् "टिड्ढाणञ्—" इति ङीपि यौधेयी सिध्यति, तथापि स्वरविशेषार्थम् अत्र पाठः कल्पितः। "अतश्च" इति लुकि ङीपि सति "उदात्तनिवृत्तिस्वरः स्यात्"—आद्यस्वरः अनुदात्तः स्यात्। किन्तु स्वार्थिके अञि सति ततःङीपि आद्युदात्तत्वं स्यात्। अतो विशेषविहितार्थं पृथक्पाठः स्वीकृतः ॥ अस्मादेव ज्ञापकात् पर्श्वाद्यणञोः पाञ्चमिकस्यापि (पञ्चमाध्यायपठितस्यापि) तद्राजस्यत्वेन "अतश्च" इत्यनेन लुक् प्राप्नोति, पर्श्वादि-अणः स्त्रियां लुक् सिद्धो भवति वा। तदेव लुक्विधानं वर्त्तमानसूत्रेण वार्य्यते इति बोध्यम्।

**११९८। अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ।४।१।७८**

**टी—। त्र्यादीनामन्त्यमुत्तमम्, तस्य समीपमुपोत्तमम्। गोत्रे यौ अणिञौ विहितौ अनार्षौ तदन्तयोर्गुरूपोत्तमयोः प्रातिपदिकयोः स्त्रियां ष्यङादेशः स्यात्। 'निर्दिश्यमानस्यादेशा भवन्ति' (परिभाषा), इत्यणिञोरेव। षङावितौ। 'यङश्चाप्' ( सूत्र ५२८ )। कुमुदगन्धेरपत्यं कौमुदगन्ध्या। वाराह्या। 'अनार्षयोः' किम्? वासिष्ठी, वैश्वामित्री। 'गुरूपोत्तमयोः' किम्? औपगवी। जातिलक्षणो ङीष्। 'गोत्रे' किम्?— अहिच्छत्रे जाता—आहिच्छत्री।**

The words having three or more letters and that have a long penultimate vowel and ending in the गोत्रप्रत्यय-अण् or इञ् ( but those not signifying any ऋषि), will take ष्यङ् in the fem., and then चाप् in the fem. will come in by the rule "यङश्चाप्" (sutra 528 ante). [ N. B.—Note that उत्तम means

the final of three or more letters, and उपोत्तम means the very near this final i.e., the penultimate, Bhattoji says all this by "आदीनाम् अन्त्यमुत्तमम्. अस्यसमीपमुपोत्तमम्" ] । Again this ष्यङ् will come in place of अण् and इञ only by the परिभाषा "निर्दिश्यमानस्यादेशा भवन्ति" ॥ Why do we say अनार्षयो: ? Witness वासिष्ठी (where अण् being आर्ष अण् does not take ष्यङ् in the fem). Why do we say गुरूपोत्तमयो: ? Witness औपगवी ( where the penultimate not being a long vowel, ष्यञ् cannot come in the fem ), but we have जातिलक्षणङीष् "by गोत्रं च चरणै: सह" (see स्त्रीप्रत्यय ) ; why again do we say गोत्र here ? witness आहिच्छत्री (with टिड्ढाणञ्—' इति ङीप् ) ; here अण् not being in sense of अपत्य or गोत्रापत्य, ष्यङ् can not come in the feminine.

मित—। गोत्रे यौ अणिञौ विहितौ अनार्षौ, तदन्तयो: प्रातिपदिकयो: गुरूपोत्तमयो: स्त्रियां ष्यङादेशो भवति। किमेतत् 'गुरूपोत्तमम्' नाम' इत्याह—' आदीनाम् त्रिप्रभृतीनाम् 'अन्त्यम्' अन्त्याक्षरम् 'उत्तमम्' तदाख्यं भवति, तस्य समीपम् इति उपोत्तमम् ( सामीप्ये अव्ययीभाव: )। अन्त्यात् अव्यवहितपूर्वम् इत्यर्थ: ॥

, ष्यङ: अनेकाल्त्वादपि "निर्दिश्यमानस्यादेशा भवन्ति" इति परिभाषया अणिञोरेव ष्यङ्, न तु तदन्तयो: समुदायस्य। न च 'ङिच्च' इति सूत्रेण अन्त्यादेशोऽप्ययं स्यात् इति वोध्यम्। एवम् कुमुदगन्धेरपत्यम् इत्यर्थे 'तस्यापत्यम्' इति अणि कुमुदगन्धि + अण् = कौमुदगन्ध:। तत: स्त्रीप्रत्यये सति, अनेन अणो:स्थाने ष्यङ् (य) = कौमुदगन्ध्य, तत: 'यङश्चाप' इति चापि सति कौमुदगन्ध्या। अधुना इञि उदाहरणमाह—वराहस्यापत्यम् इति वराह + इञ् ("अत इञ्") = वाराहि:। तस्य स्त्री इति इञ: स्थाने ष्यङ् तत: चाप् = वाराह्या। एवं वालाक्या ॥ वासिष्ठी व्याख्यात्। वैश्वामित्री इत्यपि व्याख्यात्। किन्तु यदा विश्वामित्र: मन्त्रदृष्टा न भवति

तदा "अत इञ्" इति इञि सति वैश्वामित्रिः स्यात् [ तथा च भारतम् "अष्टकस्य वैश्वामित्रेः" इत्यादि] ॥ अन्यत सुगमम् ॥

११९९ । गोत्रावयवात् । ४।१।७९ ॥

दी— । गोत्रावयवा गोत्राभिमताः कुलाख्याः, ततो गोत्रे विहितयोः अणिञोः स्त्रियां ष्यङादेशः स्यात् । अगुरूपोत्तमार्थं आरम्भः । पौणिक्या । भौणिक्या ।

Bhattoji in order to explain the word गोत्रावयव as occuring in the sutra says that words that specify or siginfy some well-known races are गोत्रावयव ( i.e. पुणिक, भुणिक, मुखर etc ) ; and if अण् or इञ् in the sense of गोत्र are attached after such गोत्रावयव words, then in the fem. these will take ष्यङ्, no matter the words are not गुरूपोत्तम । Thus we get पुणिकस्य अपत्यं इति पुणिक + इञ् = पौणिकि । Then in fem. पौणिकि + ष्यङ् आप् = पौणिक्या । Similarly भौणिक्या, मौखर्या &c.

मित— । 'अणिञोः' इति अनुवर्तते । गोत्रावयवशब्दं व्याचष्टे—गोत्रं कुलम् अभिमतं प्रख्यातं कुलम् आख्यायते इति कुलाख्याः शब्दाः, कुलनामानि इत्यर्थः, पुणिक- भुणिक-मुखरादयः, "ततो गोत्रे विहितयोरणिञोः स्त्रियां ष्यङादेशः भवति" । अन्यत् स्पष्टम् सूत्रे ।

१२०० । क्रौड्यादिभ्यश्च ।४।१।८० ॥

दी— । स्त्रियां ष्यङ् प्रत्ययः स्यात् । अगुरूपोत्तमार्थः अनणिञन्तार्थश्च आरम्भः । क्रौड्या । व्याड्या । 'सूत युवत्याम्' सूत्या । 'भोजक्षत्रिये' —भोज्या ।

To words of the क्रौड़ि—class, ष्यङ् comes in the fem. (though these are not गुरूपोत्तम or अणन्त वा इञन्त ) । The word सूत takes ष्यङ् in fem. to denote a युवति &c. and भोज to denote a क्षत्रिय ।

मित—। सुगमा। क्रौड्यादिगणो यथा—क्रौडि, लाडि, व्याडि. आपिशलि, आपक्षिति, चौपयत, चैटयत, सैकयत, बैल्वयत, सौधातकि, सूतयुवत्याम्, भोज क्षत्रिये, यौतकि, कौटि, भौरिकि भौलिकि, शाल्मलि, शाल्मलि, कापिष्टलि, गौकक्ष्य ॥

१२०१। दैवयज्ञि-शौचवृक्षि-सात्यमुग्रि-काण्ठेविद्धिभ्योऽन्यतरस्याम्। ४।१।८१॥

टी—। एभ्यश्चतुर्भ्यः ष्यङ् वा। अगोत्रार्थमिदम्, गोत्रेऽपि परत्वात् प्रवर्तते। पक्षे 'इतो मनुष्यजातेः' इति ङीष्। दैवयज्ञ्या—दैवयज्ञी। इत्यादि॥

The four words दैवयज्ञि etc (that end in the affix इञ्) optionally takes ष्यङ् in the feminine. This sutra is both for गोत्रार्थ and अगोत्रार्थ senses; optionally when this sutra does not operate these words take ङीष् in the fem. by the rule 'इतो मनुष्यजातेः'। Thus देवयज्ञस्य अपत्यम् इति दैवयज्ञ + इञ् = दैवयज्ञि। ततः ष्यङ् आप् = दैवयज्ञ्या। ङीषि तु—दैवयज्ञी। एवम् शुचिवृक्षस्य अपत्यं स्त्री = शौचिवृक्ष्या—शौचिवृक्षी। सत्यमुग्रस्य अपत्यं स्त्री = सात्यमुग्र्या—सात्यमुग्री इत्यादि॥

मित—। दैवयज्ञि, शौचवृक्षि, सात्यमुग्रि, काण्ठेविद्धि इत्येतेषां चतुर्णाम् अन्यतरस्यां (विकल्पेन) ष्यङ् प्रत्ययो भवति स्त्रियाम्। इञन्तात्एते। गोत्रग्रहणं चात्र न वर्त्तते। तेन उभयत्रविभाषा इयम्। गोत्रे पूर्वेण ष्यङादेशः प्राप्तो विकल्प्यते, अगोत्रे अनन्तरे अपत्ये पक्षे विधीयते। तेन मुक्ते—'इतोमनुष्यजातेः' इति ङीषेव भवति। ततः दैवयज्ञ्या-दैवयज्ञी काण्ठेविद्ध्या—काण्ठेविद्धी इत्यादि सिध्यति। अन्यत् सुगमम्॥

इति तद्धितापत्याधिकारप्रकरणे श्रीकृष्णसुदर्शनकृता मितभाषिणी-व्याख्या समाप्ता॥